12. Translate into Sanskrit.

1. He is living there.
2. The boy does not read in the morning.
3. The fruit falls there.
4. Where does he play ?
5. She is coming here to-day.
6. God is everywhere.
7. The elephant walks slowly.
8. When does she eat ?
9. The peacock stands there.
10. The lotus blooms in the evening.
11. What does the boy do there ?
12. When does the cow come here ?
13. She does not read well here.
14. It is coming back here.
15. The man is standing there for a long time.
16. Where is the Veena ?
17. He speaks thus.
18. Why does she come here ?
19. The girl also does not eat in the morning.
20. He plays there everyday in the morning and the evening.

13. Make sentences with the following indeclinables.

अपि, सदा, सायं, अथवा, कथमपि, उच्चैः, पुरतः, किमिति, एव, न।

# त्रयोदशः पाठः — Lesson - 13

## Sentence Structure

### Exercise 3

1. Answer in Sanskrit.

| | |
|---|---|
| 1. त्वं कुत्र वससि ? | 2. कदा त्वं पठसि ? |
| 2. अहं कदा खादामि ? | 4. कुत्र अहं गच्छामि ? |
| 5. गजः तत्र तिष्ठति किम् ? | 6. कः सायं अत्र आगच्छति ? |
| 7. त्वं तत्र कथं पठसि ? | 8. कः कदा अत्र वदति ? |

2. Fill up the blanks, choosing the correct word from the brackets.

1. सा प्रतिदिनं तत्र ——— । (गच्छसि, गच्छामि, गच्छति)
2. अहं तत्र जलं ——— । (पिबति, पिबसि, पिबामि)
3. त्वं सायं अत्र ——— । (आगच्छामि, आगच्छति, आगच्छसि)
4. अहं प्रातः देवं ——— । (नमसि, नमामि, नमति)
5. बालः सायं तत्र ——— । (क्रीडसि, क्रीडामि, क्रीडति)
6. तत्र न अहं ——— । (पठसि, पठामि, पठति)
7. अद्य त्वं अत्र न ——— । (धावति, धावसि, धावामि)

3. Translate into Sanskrit.

It eats. She drinks milk. I am going. You are writing. It lives there. I laugh. You salute. She reads. It runs. He plays.

4. Correct the following sentences and translate into English.

1. वयं सदा तत्र न वसावः ।
2. युवां कुत्र पठावः ?

3. यूयं प्रातः तत्र खादथः ।

4. सः कुत्रापि गच्छसि ।

5. युवां लिखतः ।

6. तौ सायं अत्र आगच्छथः ।

7. बालः प्रतिदिनं क्रीडथः ।

8. गजौ तत्र तिष्ठथः ।

9. ते न हसामः ।

10. अहं प्रातः नमसि ।

5. Fill up the blanks with suitable indeclinables.

1. वयं ——— पठामः ।

2. ते ——— तत्र गच्छतः ।

3. तानि ——— पिबन्ति ।

4. बालः ——— क्रीडति ।

5. पुष्पाणि ——— विकसन्ति ।

6. गजाः ——— तिष्ठन्ति ।

7. अधुना यूयं ——— गच्छथ ?

8. रामः कृष्णः ——— ——— अत्र आगच्छतः ?

9. फलानि ——— ——— पतन्ति ।

10. आवां ——— प्रातः ——— गच्छावः ।

6. Complete the sentences with the correct form of the root given with the brackets.

1. यूयं सदा अत्र ———। (क्रीड्)

2. ताः प्रतिदिनं प्रातः ———। (आगच्छ्)

3. युवां कुत्र ———। (वस्)

4. सः अत्र सम्यक् ———— । (पठ्)

5. पुष्पाणि प्रातः ———— । (विकस्)

6. गजौ अत्र जलं ———— । (पिब्)

7. एते बाले अत्र ———— । (उपविश्)

8. इमे जनाः अत्र भोजनं ———— । (खाद्)

9. ते पुस्तके कुत्र ———— ? (भव्)

10. लते ———— । (पत्)

7. Transform into dual forms.

1. अहं प्रातः न पठामि । 2. यूयं अपि प्रातः अत्र आगच्छथ ।

3. अत्र मयूराः उपविशन्ति । 4. एषः गजः ।

5. इमे जनाः । 6. तानि फलानि ।

7. अद्य अहं अत्र वसामि । 8. आसनानि कुत्र भवन्ति ?

8. Answer in Sanskrit.

1. त्वं कदा तत्र आगच्छसि ?

2. आवां कुत्र अद्य वसावः ?

3. के सायं क्रीडतः ?

4. बालाः कदा पठन्ति ?

5. काः अत्र जलं पिबन्ति ?

6. कानि तत्र पतन्ति ?

7. प्रतिदिनं प्रातः कौ देवं नमतः ?

8. अत्र के भवतः ?

9. वयं भोजनं कुत्र कदा खादामः ?

10. कानि कदा विकसन्ति ?

# चतुर्दशः पाठः — Lesson - 14

## Sentence Structure - Exercise 4

I Make as many meaningful sentences as possible choosing one word from each column.

| | | | |
|---|---|---|---|
| 1. | आवां | सम्यक् | धावतः |
| 2. | रामः | अत्र | पठन्ति |
| 3. | तानि | प्रातः | वदति |
| 4. | लता | कुत्र | नमतः |
| 5. | आसने | पुरतः | गच्छति |
| 6. | इमौ | शनैः | पतति |
| 7. | अश्वौ | किमर्थं | तिष्ठन्ति |
| 8. | पुष्पम् | उच्चैः | खादावः |
| 9. | गजः | चिरं | भवतः |
| 10. | छात्राः | पुनः | विकसति |

II. Transform the sentences as per the instruction given within the brackets.

a. ते अत्र प्रातः न आगच्छन्ति । (I person dual)

b. इमे पुस्तकं पठथ । (Correct the sentence)

c. बालः ——— तत्र ——— । (fill up the blanks with suitable words)

d. आवां प्रातः देवं नमावः । (change into interrogative)

e. सा अत्र उपविशति । (into plural)

f. रामः लिखति । कृष्णः लिखति । (combine the two sentences)

g. यूयं गच्छत । यूयं क्रीडत । (combine the two sentences)

h. छात्राः कथं पठन्ति ? (Answer the question)

i. अहं तत्र सायं न आगच्छामि । (कथमपि use this indeclinable and change the sentence)

j. They do not read always. They read only in the morning (Translate into Sanskrit)

III. Combine the two sentences using one of the indeclinables given within the brackets.

(च, यतः, सर्वत्र, कदापि, परन्तु, अथवा, अतः एव)

1. अहं प्रातः अत्र पठामि । सः सायं अत्र पठति ।

2. तानि तत्र प्रातः गच्छन्ति । तानि तत्र सायं गच्छन्ति ।

3. सा अत्र न पठति । सा अत्र न वसति ।

4. ईश्वरः तत्र भवति । ईश्वरः अत्र भवति ।

5. गजः प्रातः अत्र आगच्छति । गजः सायं अत्र न आगच्छति ।

6. सः अधुना लिखति । सः अधुना अत्र न आगच्छति ।

7. त्वं सदा पठसि । त्वं सदा क्रीडसि ।

8. सः तत्र धावति । तौ तत्र धावतः ।

IV. Translate into Sanskrit.

1. They somehow come here in the evening.

2. Generally boys do not read daily.

3. They go there again and again.

4. You are standing for a long time.

5. We always talk like this only.

6. Where are they living now ?

7. Flowers bloom only in the morning.
8. We are coming here in the evening.
9. He does not speak slowly.
10. God is present everywhere.

## पञ्चदशः पाठः — Lesson - 15

### Conversation

| | |
|---|---|
| कः Who (masc.) | क्रीडति plays |
| कं whom (masc.) | पठति reads |
| किं What (neuter) | आगच्छसि (you) come |
| किं which (neuter) | लिखति writes |
| केन By whom, by what | न no, not |
| कस्मै to whom, to what | गच्छति goes |
| कस्मात् from whom, from what | बाले Oh! child |
| | इच्छामि (I) like. |
| कस्य of whom, of what | वससि (you) dwell |
| कस्मिन् in whom, in what | प्रतिदिनं everyday |
| नयामि I take, bring | |

1. केशव ! रामः किं पठति ? शङ्कर ! रामः महाभारतं पठति

   Kesava, what does Rama read ? Sankara , Rama reads the Maha Bharata.

2. गोपाल ! माला किं लिखति ? माधव ! माला चित्रं लिखति ।

   Gopala, what does Mala write ? Madhava, Mala writes lessons.

3. विमले ! त्वं कुत्र वससि ? कमले ! अहं श्रीरंगे वसामि ।

Vimala, where do you live ? Kamala, I live in Sriranga.

4. नारायण ! अहं किं करोमि ? नीलकण्ठ ! त्वं पत्रं लिखसि ।

Narayana, what do I do ? Nilakantha, you are writing a letter.

5. नारायण ! अहं कुत्र क्रीडामि ? रङ्गनाथ ! त्वं उद्याने क्रीडसि ।

Narayana, where do I play ? Ranganatha, you play in the garden.

6. उमे ! किं पठसि ? भामे ! संस्कृतं पठामि ।

(Here अहं -I, is understood by the presence of verbal ending 'मि'.)

Uma, what do you read ? Bhama, "I" read Sanskrit.

7. गिरिजे ! कदा आगच्छसि ? विजये ! सायंकाले आगच्छामि ।
Girija when do you come ? Vijaya "I" come in the evening.

8. दामोदर ! कुत्र वससि ? वेंकटेश ! त्रिशिरःपुरे वसामि ।
Damodara, where did you live ? Venkatesa, "I" live in Trichy.

Make as many sentences as possible with the words given within the brackets.

9. नटराजः किं पठति ? (रामायणम्/भगवद्गीताम्/पत्रिकाम्) (पठति)
(What does Nataraja read ?)

10. गोपालः कुत्र क्रीडति ? (उद्याने/विद्यालये) (क्रीडति)
(Where does Gopala play ? Gopala plays in Garden/school.)

Translate into English.

नटराजः किं पठति ? सः पत्रिकां पठति ।

गोपालः कुत्र क्रीडति ? सः उद्याने क्रीडति ।

रामः किं करोति ? सः गुरुं नमति ।

कौ तौ ? तौ बालौ ।

अश्वः कुत्र तिष्ठति ? अश्वः मन्दुरायां (stable) तिष्ठति ।

बालौ किं कुरुतः ? तौ पाठं पठतः ।

गोपालः कुत्र गच्छति ? सः कार्यालयं गच्छति ।

कौ तौ ? तौ मम जनकौ ।

| | |
|---|---|
| चित्रं - picture | आगच्छसि - "you" come |
| पत्रिका - newspaper | उद्याने - in the garden. |
| गुरुं - teacher (accusative) | जनकौ - parents. |

—★—

## षोडशः पाठः — Lesson 16

Accusative case (II case) द्वितीया विभक्तिः

The object in a sentence is put in the Accusative case.

Masculine words ending in अ

| | | |
|---|---|---|
| रामः - रामं | रामौ | रामान् |
| Rama (obj) | two Ramas | many Ramas |
| गजः - गजं | गजौ | गजान् |
| elephant (obj) | two elephants | many elephants. |

| | | |
|---|---|---|
| हस्तः - हस्तं | हस्तौ | हस्तान् |
| hand (obj) | two hands | many hands |
| दीपः - दीपं | दीपौ | दीपान् |
| lamp (obj) | two lamps | many lamps. |
| वृक्षः - वृक्षं | वृक्षौ | वृक्षान् |
| tree (obj) | two trees | many trees |

Read the following sentences :

| | | |
|---|---|---|
| अहं रामं पश्यामि | - | I see Rama. |
| सः गजं नयति | - | He leads the elephant. |
| सा हस्तौ प्रसरति | - | She extends both the hands. |
| सा दीपं नमति | - | She salutes the lamp. |

Feminine Gender words ending in आ

| | | |
|---|---|---|
| सीता - सीतां | सीते | सीताः |
| Sita | two Sitas | many Sitas |
| रमा - रमां | रमे | रमाः |
| Rama | two Ramas | many Ramas |
| लता - लतां | लते | लताः |
| creeper | two creepers | many creepers |

Eg. रामः सीतां/रमां/लतां पश्यति

Rāma sees Sita, Rama, creeper.

Neuter gender words ending in अ

| | | |
|---|---|---|
| फलम् - फलम् | फले | फलानि |
| fruit | two fruits | many fruits |

| | | |
|---|---|---|
| नेत्रम् – नेत्रम् | नेत्रे | नेत्राणि |
| eye | two eyes | many eyes |
| पुस्तकं – पुस्तकं | पुस्तके | पुस्तकानि |
| book | two books | many books |
| पत्रम् – पत्रम् | पत्रे | पत्राणि |
| leaf | two leaves | many leaves |

Eg. सीता फलं खादति - Sita eats the fruit.

रामः पुस्तकं पठति - Rama reads the book.

सः पत्रं समर्पयति - He offers a leaf.

**Pronouns**

**I. In Nominative case**

| | Sing. | Dual. | Plural |
|---|---|---|---|
| | अहं I | आवां We (2) | वयं we (many) |
| | त्वं You | युवां you (2) | यूयं you (many) |
| Mas. | सः He | तौ they (2) | ते they (many) |
| Fem. | सा She | ते they (2) | ताः they (many) |
| Neu. | तत् It | ते they (2) | तानि they (many) |
| Mas. | अयं This | इमौ these (2) | इमे these (many) |
| Fem. | इयं This | इमे These (2) | इमाः these (many) |
| Neu. | इदं This | इमे These (2) | इमानि these (many) |
| Mas. | एषः This | एतौ These (2) | एते these (many) |
| Fem. | एषा This | एते These (2) | एताः these (many) |

| | | | |
|---|---|---|---|
| Neu. | एतत् This | एते These (2) | एतानि these (many) |
| Mas. | कः Who | कौ which (2) | के which (many) |
| Fem. | का who | के which (2) | काः which (many) |
| Neu. | किं who | के which (2) | कानि which (many) |

II. Accusative case forms Pronouns.

| | | | |
|---|---|---|---|
| | अहं - मां, मा | आवां, नौ | अस्मान्, नः |
| | I - me | us (obj) | us (obj) |
| | त्वं - त्वां, त्वा | युवां, वां | युष्मान्, वः |
| | You - you (obj) | you (two )(obj) | you (many (obj) |
| Mas. | सः - तं | तौ | तान् |
| | He - him | them( two) (obj) | them (many (obj) |
| Fem. | सा - तां | ते | ताः |
| | She - her | them two (obj) | them (many (obj) |
| Neu. | तत् - तत् | ते | तानि |
| | It - it | them (two) (obj) | them (many(obj.) |
| Mas. | अयम् – इमं | इमौ | इमान् |
| | This - him | them( 2 )(obj) | them (many - obj) |
| Fem. | इयम् - इमां | इमे | इमाः |
| | This - him | them (2 )(obj) | them (many obj) |
| Neu. | इदं - इदं | इमे | इमानि |
| | This - it | them (2) (obj) | them (many obj) |
| Mas. | एषः– एतं, एनं | एतौ, एनौ | एतान्, एनान् |
| | This (pro.) - him | them (2)(obj) | them (obj) many |

| | | | |
|---|---|---|---|
| Fem. | एषा - एतां, एनां | एते, एने | एताः, एनाः |
| | This - her | them (2) (obj) | them (many - obj) |
| Neu. | एतत् - एतत् | एते, एने | एतानि |
| | This - It | them (2) obj. | them (many obj. |
| Mas. | कः – कं | कौ | कान् |
| | who - whom | whom (2) obj. | whom (many) (obj. |
| Fem. | का – कां | के | काः |
| | who - whom | whom (2) obj. | whom (many obj) |
| Neu. | किम – किम् | के | कानि |
| | what - which | which (2) obj. | which (many (obj) |

III. Let us see some sentences with an object.

रामः पाठान् पठति ।

Rama reads lessons.

जनाः देवं नमन्ति ।

People worship God.

जनकः बालौ पोषयति ।

The father nourishes (supports) two boys.

गजः जलं पिबति ।

Elephant drinks water.

ते अश्वान् पश्यन्ति ।

They see the horses.

त्वं आचार्यं नमसि ।

You are saluting the teacher.

नृपः जनान् रक्षति ।

The king protects the people.

अहं चित्रं पश्यामि ।

I see a picture.

IV. Some questions and answers involving Accusative formations (object) are given below :

त्वं प्रातः किं पठसि ?

What do you read in the morning ?

अहं प्रातः पुस्तकं पठामि ।

I read a book in the morning.

सः कं तत्र पश्यति ?

What (masc) does he see there ?

सः तत्र गजं पश्यति ।

He sees an elephant there.

सा कं नमति ?

Whom does she salute ?

सा देवं नमति ।

She salutes the God.

बालः के खादति ?

What (dual) does the boy eat ?

बालः फले खादति।

The boy eats two fruits.

V. Some of the indeclinables govern a noun in the Accusative case.

Eg. प्रति towards, विना - without, उभयतः - both sides, सर्वतः - all around.

जनाः नगरं प्रति गच्छन्ति।

People go towards the city.

छात्राः पुस्तकं विना गच्छन्ति।

The boys are going without books.

विद्यालयं उभयतः वृक्षाः सन्ति।

There are trees on both sides of the school.

पुष्पवाटीं सर्वतः कृष्णः।

Krishna is there all around the garden.

VI. With respect to verbs involving movement the destination is put in the Accusative case.

अहं विद्यालयं गच्छामि।

I go to school.

रामः सायं गृहं गच्छति।

Rama goes home in the evening.

ते ग्रामं आगच्छन्ति।

They are coming to the village.

VII. Verbs governing two objects.

There are 32 verbs in Sanskrit that govern two objects. Some of them are given below :

पचति - cooks, दण्डयति - punishes, पृच्छति - asks, नयति - leads, हरति - takes away.

सः तण्डुलान् ओदनं पचति।

He cooks rice "as" food.

For the verb पचति cooks तण्डुलान् "raw rice" and ओदनं "cooked rice" act as objects.

नृपः स्तेनं शतं दण्डयति।

The king punishes the thief (with) 100 (rupees)

सः माणवकं पन्थानं पृच्छति।

He asks the student (of) the path.

ते अजान् गृहं नयन्ति।

They lead the sheep (to) home.

**Exercises**

I. Answer in Sanskrit.

1. जनाः तत्र किं पश्यन्ति ?
2. प्रातः त्वं कुत्र गच्छसि ?
3. छात्राः कान् नमन्ति ?
4. यूयं किं लिखथ ?
5. ते कदा किं खादतः ?
6. कः कदा कान् ग्रामं नयति ?
7. सः कदा कुत्र आगच्छति ?

8. अश्वाः तत्र किं पिबन्ति ?

II. Fill up the blanks with suitable forms of words given within the brackets.

1. आवां प्रातः ——— गच्छावः । (विद्यालयः)

2. त्वं तत्र ——— नमसि । (ईश्वरः)

3. नृपः ——— रक्षति । (जनाः)

4. बालौ ——— पठतः । (पाठः)

5. आचार्यः ——— पृच्छति । (सः, मार्गः)

6. गोपालः ——— नयति । (अजाः, ग्रामः)

7. सायं ——— आगच्छन्ति । (सः, गृहं)

8. ——— सर्वतः जलं भवति । (ग्रामः)

9. ——— उभयतः छात्राः । (आचार्यः)

10. वयं तत्र ——— विना न गच्छामः । (पुस्तकं)

III. Conjugate the following words in Accusative case.

अच्युतः, अश्वौ, इन्द्रः, बालौ, आशा, गिरिजे, पाठशाला, रमे, धनं, भवनानि, विमाने, नगरं, विद्या, सुता ।

IV. Translate into Sanskrit.

1. They are coming home in the evening.

2. Whom do you see there ?

3. She is cooking food in the morning.

4. I always speak truth.

5. People worship god in the morning.

6. They are drinking water there.

7. We both do not write lessons in the morning.

8. You are writing a letter.
9. Rama is taking flowers and fruits there.
10. Why are you both not coming to the college ?

# सप्तदशः पाठः — Lesson - 17

**III case : Instrumental case (By, with, along with)**

The instrumental case carries the significance of the prepositions by, with, and along with. Let us begin with some Nominative forms.

| | | |
|---|---|---|
| अ ending Masc. | अ ending Neuter | आ ending Fem. |
| रामः Rama | फलं fruit | सीता Sita |
| गजः elephant | नेत्रं eye | रमा Rama |
| हस्तः hand | पुस्तकं book | लता creeper |
| वृक्षः tree | पत्रं leaf, paper | बाला girl |
| इ ending (Mas.) | ई ending (Fem.) | इ ending (Neu.) |
| मुनिः sage | मतिः intellect | वारि water |
| हरिः Hari | भूमिः earth | दधि curd |
| उ ending (Mas.) | उ ending (Fem.) | उ ending (Neu.) |
| शम्भुः Sambhu | धेनुः cow | मधु honey |
| वायुः air | चञ्चुः beak of a bird | वस्तु object |

II. Nominative and Accusative case forms.

| Nominative | | | Accusative | | |
|---|---|---|---|---|---|
| हस्तः | हस्तौ | हस्ताः | हस्तं | हस्तौ | हस्तान् |
| वृक्षः | वृक्षौ | वृक्षाः | वृक्षं | वृक्षौ | वृक्षान् |
| फलं | फले | फलानि | फलं | फले | फलानि |
| पुस्तकं | पुस्तके | पुस्तकानि | पुस्तकं | पुस्तके | पुस्तकानि |
| पत्रं | पत्रे | पत्राणि | पत्रं | पत्रे | पत्राणि |
| सीता | सीते | सीताः | सीतां | सीते | सीताः |
| रमा | रमे | रमाः | रमां | रमे | रमाः |
| लता | लते | लताः | लतां | लते | लताः |
| बाला | बाले | बालाः | बालां | बाले | बालाः |
| हरिः | हरी | हरयः | हरिं | हरी | हरीन् |
| मतिः | मती | मतयः | मतिं | मती | मतीः |
| भूमिः | भूमी | भूमयः | भूमिं | भूमी | भूमीः |
| वारि | वारिणी | वारीणि | वारि | वारिणी | वारीणि |
| दधि | दधिनी | दधीनि | दधि | दधिनी | दधीनि |
| शंभुः | शंभू | शंभवः | शंभुं | शंभू | शंभून् |
| वायुः | वायू | वायवः | वायुं | वायू | वायून् |
| धेनुः | धेनू | धेनवः | धेनुं | धेनू | धेनूः |
| चञ्चुः | चञ्चू | चञ्चवः | चञ्चुं | चञ्चू | चञ्चूः |
| मधु | मधुनी | मधूनि | मधु | मधुनी | मधूनि |
| वस्तु | वस्तुनी | वस्तूनि | वस्तु | वस्तुनी | वस्तूनि |

III. Instrumental case forms:

| | Singular | Dual | Plural |
|---|---|---|---|
| Mas. | रामेण (by Rama) | रामाभ्यां | रामैः |
| | गजेन (by the elephant) | गजाभ्यां | गजैः |
| | हस्तेन (by the hand) | हस्ताभ्यां | हस्तैः |
| | बाणेन (by the arrow) | बाणाभ्यां | बाणैः |
| Neu. | फलेन (by the fruit) | फलाभ्यां | फलैः |
| | नेत्रेण (by the eye) | नेत्राभ्यां | नेत्रैः |
| | पुस्तकेन (by the book) | पुस्तकाभ्यां | पुस्तकैः |
| | पत्रेण (by the leaf) | पत्राभ्यां | पत्रैः |
| Fem. | सीतया (by Sita) | सीताभ्यां | सीताभिः |
| | रमया (by Rama) | रमाभ्यां | रमाभिः |
| | लतया (by the creeper) | लताभ्यां | लताभिः |
| | बालया (by the girl) | बालाभ्यां | बालाभिः |
| इ - Mas. | मुनिना (by the sage) | मुनिभ्यां | मुनिभिः |
| | हरिणा (by Hari) | हरिभ्यां | हरिभिः |
| इ - Fem. | मत्या (by the intellect) | मतिभ्यां | मतिभिः |
| | भूम्या (by the earth) | भूमिभ्यां | भूमिभिः |
| इ - Neu. | वारिणा (by the water) | वारिभ्यां | वारिभिः |
| | दध्ना (by the curd) | दधिभ्यां | दधिभिः |

| | | | |
|---|---|---|---|
| उ - Mas. | शंभुना (by Sambhu) | शंभुभ्यां | शंभुभिः |
| | वायुना (by air) | वायुभ्यां | वायुभिः |
| उ - Fem. | धेन्वा (by the cow) | धेनुभ्यां | धेनुभिः |
| | चञ्च्वा (by the beak) | चञ्चुभ्यां | चञ्चुभिः |
| उ - Neu. | मधुना (by honey) | मधुभ्यां | मधुभिः |
| | वस्तुना (by the object) | वस्तुभ्यां | वस्तुभिः |

IV. Instrumental case forms of Pronouns.

| | | | |
|---|---|---|---|
| अहं - I | मया | आवाभ्यां | अस्माभिः |
| सः - He | तेन | ताभ्यां | तैः |
| सा - She | तया | ताभ्यां | ताभिः |
| तत् - It | तेन | ताभ्यां | तैः |
| Mas. अयं - This person | अनेन | आभ्यां | एभिः |
| Fem. इयं - This person | अनया | आभ्यां | आभिः |
| Neu. इदं - This | अनेन | आभ्यां | एभिः |
| Mas. एषः - This person | एतेन | एताभ्यां | एतैः |
| Fem. एषा - This person | एतया | एताभ्यां | एताभिः |
| Neu. एतत् - This | एतेन | एताभ्यां | एतैः |
| Mas. कः - who | केन | काभ्यां | कैः |
| Fem. का - who | कया | काभ्यां | काभिः |
| Neu. किम् - which | केन | काभ्यां | कैः |

V. Write down the Nominative, Accusative and Instrumental forms of the following.

| | | | | |
|---|---|---|---|---|
| Mas. | जनकः | father | सूर्यः | sun |
| | गोपालः | shepherd | अश्वः | Horse |
| | केशवः | Kesava | बालः | boy |
| Neu. | पद्मम् | lotus | पट्टणं | town |
| | सत्यं | truth | भोजनम् | food |
| | तैलम् | oil | बलम् | strength |
| Fem. | विद्या | learning | यात्रा | tour |
| | निद्रा | sleep | चन्द्रिका | moon |
| | रेखा | line | प्रभा | light |
| | रथ्या | Street | कथा | story |
| Mas. | निधिः | treasure | अतिथिः | guest |
| | अद्रिः | mountain | गिरिः | hill |
| | राशिः | heap | ध्वनिः | sound |
| Fem. | यष्टिः | stick | नीतिः | justice |
| | भीतिः | fear | शक्तिः | strength |
| | वृष्टिः | rain | कीर्तिः | fame |
| Neu. | प्रभुः | Master | बाहुः | hand |
| | सेतुः | dam | वेणुः | bamboo |
| | परशुः | axe | तन्तुः | thread |

VI. ई ending Fem. Gender words.

गौरी - Gauri गौरी गौर्यौ गौर्यः

| | | | |
|---|---|---|---|
| जननी - mother | जननी | जनन्यौ | जनन्यः |
| लेखिनी - pen | लेखिनी | लेखिन्यौ | लेखिन्यः |
| नदी - river | नदी | नद्यौ | नद्यः |

VII. Their Accusative and Instrumental forms.

| | | | | | |
|---|---|---|---|---|---|
| गौरीं | गौर्यौ | गौरीः | गौर्या | गौरीभ्यां | गौरीभिः |
| जननीं | जनन्यौ | जननीः | जनन्या | जननीभ्यां | जननीभिः |
| लेखिनीं | लेखिन्यौ | लेखिनीः | लेखिन्या | लेखिनीभ्यां | लेखिनीभिः |
| नदीं | नद्यौ | नदीः | नद्या | नदीभ्यां | नदीभिः |

VIII. Let us see some sentences in Instrumental case forms.

रामः बाणैः रावणं जयति।

Rama conquers Ravana with arrows.

त्वं हस्तेन अश्वं ताडयसि।

You are beating the horse with the hand.

जनाः पुष्पैः देवं पूजयन्ति।

People worship God with flowers.

अहं नेत्राभ्यां चित्रं पश्यामि।

I see the picture with both eyes.

भूपतिः रथेन गच्छति।

The king goes by the chariot.

अहं हस्तेन लिखामि।

I write by hand.

मालती कृष्णेन सह वसति।

Malati lives with Krishna.

बालः हस्ताभ्यां नमति।

The boys salutes with both hands.

त्वं कर्णाभ्यां गानं आकर्णयसि।

You are listening (to) music with (both) the ears.

मृगाः पादैः चरन्ति।

The animals move with legs.

कृष्णः बालैः सह क्रीडति।

Krishna plays with boys.

भक्तः अञ्जलिना नमस्करोति।

The devotee worships with folded hand.

पाणिनिना व्याकरणं कृतम्।

The grammar was composed by Panini.

गायकः पाणिभ्यां तालयति।

The singer keeps the beat with both hands.

तृषितः हस्ताभ्यां जलं पिबति।

The thirsty man drinks water with both hands.

रामः मुनिभिः सह वसति।

Rama lives with sages.

बालकः गुरुणा सह आपणं गच्छति।

The boy goes to the shop with the teacher.

विष्णुना गजेन्द्रः रक्षितः।

Gajendra was protected by Vishnu.

जनकः सूनुभ्यां सह क्रीडति।

The father plays with two sons.

IX. Exercise : Complete the sentence with Instrumental forms of words given within brackets and translate.

Eg. पाणि - पाणिना (with the hand)

अहं (पाणि) लिखामि ।

त्वं (पाद) धावसि ।

सः (गुरु) सह गृहं गच्छति ।

बालौ (बन्धु) सह नगरं गच्छतः ।

गोपालः (नेत्र) पश्यति ।

रमा (रवि) सह आगच्छति ।

X. Translate into Sanskrit.

1. He stands on his (both) legs.
2. You are writing with pen.
3. You both are playing with foot.
4. You (all) move with legs.
5. I read with my eyes.
6. We both salute with heads.
7. We (all) run with legs.
8. Sita reads lesson with Lalita.
9. The children give fruits with hands.
10. Rama writes (draws) picture with hand.
11. I see with eyes.
12. Sita hears with ears.
13. The horse runs with legs.

—★—

# अष्टदशः पाठः — Lesson - 18

| | | |
|---|---|---|
| राजा king | अपि also | स्नुषा daughter-in-law |
| दरिद्रः poor man | सह along with | केन with whom |
| पुरतः In front of | करोति does,makes | वद speak |
| आगमनं coming | करोषि You are doing | एव only |
| मया with me | तया with her | भद्र good man ! |

एकः राजा। A King.

तस्य पुरुतः एकः दरिद्रः।

There is a poor man in his presence.

राजा-भद्र ! आगमन कारणं किं ?

King - Sir, what is the reason for (your) arrival ?

दरिद्रः - एकः सन्देहः। Poor man : A doubt

राजा - कः सन्देहः? King : What is the doubt ?

दरिद्रः - अंबा कुप्यति। Poor man : Mother is angry.

राजा - केन ? King : For what reason ? (why ?)

दरिद्रः - तत्र एव सन्देहः। न मया। न स्नुषया। Poor man : There lies the doubt. It is not due to me. It is not due to the daughter-in-law.

राजा-स्नुषा किं करोति ?
King : What does the daughter-in-law do.

दरिद्रः - सापि कुप्यति Poor man : She is also angry.

राजा - केन। King : For what ?

दरिद्रः - न अंबया। न मया।

Poor man : Not due to my mother. Not due to me.

राजा - त्वं किं करोषि ? King : What do you do ?

दरिद्रः - अहमपि कुप्यामि। Poor man : I am also angry.

राजा - केन ? King : For what ?

दरिद्रः - न तया। न तया। राजन् ! वद ! कस्य दोषः अयम् ?

Poor man : Not due to her. Not due to her. Oh ! king ! whose fault is this ?

राजा दारिद्र्यं कोपकारणं इति धनं यच्छति।

The King, thinking that, poverty is the reason for anger gives money.

अंबा कुष्यति न मया न स्नुषया सापि नांबया न मया।
अहमपि न तया न तया वद राजन् ! कस्य दोषः अयम्॥



# एकोनविंशः पाठः — Lesson - 19

**IV Case : Dative Case (has the sense of the preposition "to" and "for")**

जनकः पुत्रेभ्यः धनं यच्छति।

The father gives money to sons.

कृषीवलः वृषभाभ्यां तुषं यच्छति।

The farmer gives the husk to the bulls.

सः रवये अर्घ्यं अर्पयति।

He is offering oblations to the sun.

The Dative forms used here are : पुत्रेभ्यः to the sons; वृषभाभ्यां to the bulls; रवये - to Ravi (sun). There are also other uses of the Dative case. for eg.

1. धारयति - he (owes).

2. रोचते - lies.

3. स्पृहयति - desires

4. कुप्यति - क्रुध्यति - is angry

5. द्रुह्यति - to commit treachery.

6. ईर्ष्यति, असूयति - is jealous.

1. धारयति - (to owe) governs the indirect object in dative case.

Eg. गोपालः शङ्कराय शतं रूप्यकाणि धारयति।

Gopala owes 100 rupees to Sankara.

अहं तुभ्यं न किञ्चित् धारयामि।

I do not owe anything to you.

2. रोचते - (to like) governs the "liker" in the dative case.

मोदकः गणेशाय रोचते।

The sweetmeat is to Ganesa's liking. (Ganesa likes sweetmeat)

जनकस्य हितवचनं पुत्राय न रोचते।

The father's beneficial words are not to the son's liking.

गोविन्दाय त्वं न रोचसे।

You are not to Govinda's liking.

3. स्पृहयति

(desires) - The desired object is put in the Dative case.

बाला पुष्पेभ्यः स्पृहयति ।

The girl desires for flowers.

त्वं दुकूलाय स्पृहयसि किल ।

You are indeed desiring for silk.

आवां छायाचित्राय स्पृहयावः ।

We are desiring for a movie.

बालकः क्रीडनकाय स्पृहयति ।

The boy desires for a play thing.

5. The verbs कुप्यति क्रुध्यति दुह्यति असूयति govern the indircal object in Dative case.

गुरुः अविनीताय शिष्याय कुप्यति (क्रुध्यति) ।

The teacher is angry towards the impertinent student.

यजमानः असमर्थाय भृतकाय कुप्यति (क्रुध्यति) ।

The master is angry towards the incapable servant.

मन्दः बालकः चतुराय सहपाठकाय ईर्ष्यति ।

The dull boy is jealous towards the intelligent classmate.

परेभ्यः असूया महान् दुर्गुणः ।

It is a bad quality to entertain jealousy towards others.

**Dative forms of 'अ' ending words.**

| | | |
|---|---|---|
| आहराय (for food) | आहराभ्यां | आहारेभ्यः |
| शिष्याय (to student) | शिष्याभ्यां | शिष्येभ्यः |
| वृषभाय (to bull) | वृषभाभ्यां | वृषभेभ्यः |
| पुत्राय (to son) | पुत्राभ्यां | पुत्रेभ्यः |
| देवाय (to god) | देवाभ्यां | देवेभ्यः |

Dative forms of 'इ' ending words.

| | | |
|---|---|---|
| रवये (to Ravi) | रविभ्यां | रविभ्यः |
| अतिथये (to guest) | अतिथिभ्यां | अतिथिभ्यः |
| अगतये (to orphan) | अगतिभ्यां | अगतिभ्यः |
| कवये (to poet) | कविभ्यां | कविभ्यः |

Dative forms of उ ending words.

| | | |
|---|---|---|
| शंभवे (to Sambhu) | शंभुभ्यां | शंभुभ्यः |
| पशवे (to cow) | पशुभ्यां | पशुभ्यः |
| गुरवे (to teacher) | गुरुभ्यां | गुरुभ्यः |
| विष्णवे (to Vishnu) | विष्णुभ्यां | विष्णुभ्यः |

Some more dative forms.

| | | |
|---|---|---|
| शंकराय (to Sankara) | शंकराभ्यां | शंकरेभ्यः |
| गणेशाय (to Ganesa) | गणेशाभ्यां | गणेशेभ्यः |
| हस्ताय (to hand) | हस्ताभ्यां | हस्तेभ्यः |
| फलाय (to fruit) | फलाभ्यां | फलेभ्यः |

| | | |
|---|---|---|
| रमायै (to Rama) | रमाभ्यां | रमाभ्यः |
| लतायै (to creeper) | लताभ्यां | लताभ्यः |
| हरये (to Hari) | हरिभ्यां | हरिभ्यः |
| मतये, मत्यै (to intellect) | मतिभ्यां | मतिभ्यः |
| वारिणे (to water) | वारिभ्यां | वारिभ्यः |
| गौर्यै (to Gauri) | गौरीभ्यां | गौरीभ्यः |
| जनन्यै (to mother) | जननीभ्यां | जननीभ्यः |
| धेन्वै, धेनवे (to cow) | धेनुभ्यां | धेनुभ्यः |
| चञ्च्वै, चञ्च्वे (to beak) | चञ्चुभ्यां | चञ्चुभ्यः |
| मधवे, मधुने (to honey) | मधुभ्यां | मधुभ्यः |
| वस्तवे, वस्तुने (to object) | वस्तुभ्यां | वस्तुभ्यः |

Dative forms of Pronouns.

| | | | |
|---|---|---|---|
| अहं— | मह्यं, मे (to me) | आवाभ्यां, नौ | अस्मभ्यं, नः |
| त्वं— | तुभ्यं, ते (to you) | युवाभ्यां, वां | युष्मभ्यं, वः |
| सः— | तस्मै (to him) | ताभ्यां | तेभ्यः |
| सा— | तस्यै (to her) | ताभ्यां | ताभ्यः |
| तत्— | तस्मै (to it) | ताभ्यां | तेभ्यः |
| अयं— | अस्मै (to him) | आभ्यां | एभ्यः |
| इयं— | अस्यै (to her) | आभ्यां | आभ्यः |
| इदं— | अस्मै (to it) | आभ्यां | एभ्वः |
| एषः— | एतस्मै (to him) | एताभ्यां | एतेभ्यः |
| एषा— | एतस्यै (to her) | एताभ्यां | एताभ्यः |

| | | | |
|---|---|---|---|
| एतत्— | एतस्मै (to it) | एताभ्यां | एतेभ्यः |
| कः— | कस्मै (to whom) | काभ्यां | केभ्यः |
| का— | कस्यै (to whom) | काभ्यां | काभ्यः |
| किं— | कस्मै (to which) | काभ्यां | केभ्यः |

**Exercise I**

Fill upthe blanks with suitable Dative case forms and Translate.

1. सीता (पुष्प) उद्यानं गच्छति।
2. वृक्षाः (परोपकार) फलन्ति।
3. नृपतिः (कवि) पारितोषिकं यच्छति।
4. भक्तः (हरि) पुष्पाणि आनयति।
5. शिष्यः (गुरु) दक्षिणां आहरति।
6. हिमवान् (शंभु) पार्वतीं यच्छति।

II. Questions and answers involving Dative forms. Translate the sentences.

| | |
|---|---|
| धनं किमर्थम् ? | धनं दानाय। |
| विद्या किमर्थम् ? | विद्या ज्ञानाय। |
| वस्त्रं कस्मै प्रयोजनाय ? | वस्त्रं परिधानाय। |
| पुष्पाणि किमर्थम् ? | पूजायै पुष्पाणि। |
| तव प्रयत्नः कस्मै ? | मम प्रयत्नः सुखाय। |
| अश्वः किमर्थम् | प्रयाणाय अश्वः। |
| क्षीरं कस्मै ? | बालाय क्षीरम्। |
| कस्मै नमः करोति ? | हरये नमः करोति। |

| | |
|---|---|
| कस्मै नमः ? | नमः शिवाय। |
| मूर्खस्य विद्या किमर्थम् ? | मूर्खस्य विद्या विवादाय। |
| माता कस्मै क्रुध्यति ? | माता पुत्राय क्रुध्यति। |
| नृपः कस्मै कुप्यति ? | नृपः चोराय कुप्यति। |
| बालः कस्मै स्पृहयति ? | बालः मोदकाय स्पृहयति। |
| शुकाय किं रोचते ? | शुकाय फलं रोचते। |
| किं पापाय भवति ? | परपीडा पापाय भवति। |

III. Answer the following questions in Sanskrit and Translate.

1. त्वं कया पाठान् लिखसि ?
2. सः कथं नगरं गच्छति ?
3. काभ्यां सः जलं पिबति ?
4. यूयं कथं चित्रं पश्यथ ?
5. ताः कैः सह पाठशालां गच्छन्ति ?
6. रामः केन सह कुत्र गच्छति ?
7. केन विना वयं न जीवामः ?
8. किमर्थं सा तटाकं गच्छति ?
9. कुतः बालाः प्रतिदिनं उद्यानं गच्छन्ति ?
10. जनाः देवान् किमर्थं पुष्पैः पूजयन्ति ?
11. नृपाः केभ्यः धनं यच्छन्ति ?
12. किमर्थं मृगाः प्रतिदिनं इतस्ततः अटन्ति ? (इतस्ततः - here and there)
13. जनकः कस्मै धनं संपादयति ?

14. कः कस्मै कुप्यति ?

15. किमर्थं छात्राः प्रतिदिनं विद्यालयं आगच्छन्ति ?

16. सीता कस्यै कथां कथयति ?

Exercise IV. Fill up the blanks with suitable case forms of words given within brackets.

1. वयं (आहार) गृहं आगच्छामः ।

2. (आचार्य) नमः ।

3. (पुस्तक) विना आवां न (पाठशाला) गच्छावः ।

4. (पुष्प) (फल) च यूयं प्रातः तत्र गच्छथ ।

5. जनाः (कल्याण) (पुष्प) देवं पूजयन्ति ।

6. रथः (चक्र) चलति ।

7. (भोजन) अलम् ।

8. जनकः (पुत्र) (धन) यच्छति ।

9. अश्वः (पाद) वेगेन धावति ।

10. सः (मित्र) कुप्यति ।

Exercise :— V. Choose the correct from of one of the words given within brackets and fill up the blanks

(अत्र, सायं, मोक्षाय, मित्राभ्यां, तेभ्यः, हस्तेन, परीक्षायै, गृहं, याचकेभ्यः, नमः ।)

1. भक्तः देवं ——— पूजयति ।

2. कृष्णः ——— पत्रं लिखति ।

3. वयं ——— सह वसामः ।

4. बालकः ——— भोजनाय ——— आगच्छति ।

5. यूयं ———— कथां कथयथ।

6. छात्राः — तत्र वसन्ति।

7. नृपः — यच्छति।

8. आचार्येभ्यः —।

Ex. VI. Fill up the blanks, choosing the correct form among the words given within the brackets

1. सा — गानं शृणोति। (कर्णेन, कर्णाभ्यां कर्णैः)

2. धनिकः — धनं यच्छति। (विप्रं, विप्रेण, विप्राय)

3. बालिकाः — सह तत्र गच्छन्ति। (मित्रेभ्यः, मित्रैः मित्राय)

4. गोपालः — आचार्यं नमति। (हस्तेन, हस्ताभ्यां, हस्तैः )

5. नृपः — वनं गच्छति। (रथेन, रथाय, रथाभ्यां )

6. पुरुषः — इतस्ततः अटति। (अन्नेन, अन्नाय, अन्नैः )

7. कृष्णः — पुस्तकं पठति। ( परीक्षायै, परीक्षया )

8. अहं — जलं आनयामि। ( सहोदरेण, सहोदराय, सहोदरैः )

9. पथिकः — पन्थानं पृच्छति। ( माणवकं, माणवकेन, माणवकाय )

10. —अलम्। ( भोजनेन, भोजनाय, भोजनं )

Ex VII. Translate into Sanskrit.

1. We worship god every morning for welfare.
2. They are wandering here and there for grass.
3. They are not studying here with as.
4. Rama goes to the forest along with Sita and Lakshmana.
5. The teacher is teaching lessons to students.
6. The boys are playing with ball in the evening.

7. With whom and for what purpose are you going there ?

8. Generally I do not get angry with my friends.

9. The girls are coming to the pond for water.

10. I go to the garden for flowers.

11. Mother gives milk to the child.

12. The master is angry with the servant.

13. The child desires for the ball.

14. The students are going to school for learning.

15. The cow desires for grass.

(Note: क्षेमः- welfare; प्रायः- generally तटाकः - pond; उद्यानं- garden; यजमानः - master; सेवकः - servant कन्दुकः ball; अध्ययनं - education; विद्याशाला- school; तृणं - grass)



## विंशः पाठः — Lesson -20

पञ्चमी विभक्तिः Ablative case (V case)
sixfold uses of Ablative case

1. While detachment is involved, the stationary object is put in the Ablative case. (equivalent to English preposition "from")

पुस्तकं हस्तात् पतति ।

The book falls from the hand

बालौ वृक्षात् अवतरतः

Two boys are descending from the free.

गुरुः नगरात् आगच्छति ।

The teacher is coming from the city.

नेत्राभ्यां अश्रु स्रवति। Tears flow from the two eyes.

ग्रामात् बहिः सः गच्छति।

He is going out "from" the village.

2. An object or person giving rise to another is put in the Ablative case.

ईश्वरात् प्रजाः प्रजायन्ते।

From god are born the people.

सत्पुत्रात् सन्तोषः जायते।

From a good son rises happiness.

3. The object of origin is put in the Ablative case.

हिमगिरेः गङ्गा प्रभवति।

From the Himalayas rises the Ganges.

त्रयम्बकाद्रेः गोदावरी, सह्यात् कावेरी च प्रभवतः।

Godavari and the Kaveri rise from Tryambaka and Sahya. (mountains respectively)

उदयपर्वतात् सूर्यः उदेति।

The sun rises from the Udaya mountain.

4. The fifth case is also used in the sense of "fear from" and "protected from"

मूषकः मार्जारात् त्रस्यति।

The rat is fearing (has fear) from the cat.

जनाः लुण्टाकेभ्यः त्रस्यन्ति।

People are fearing from (have fear from) dacoits.

गजः सिंहात् बिभेति।

The elephant is fearing from (has fear from) lion.

राजा शत्रुभ्यः राज्यं रक्षति।

The king is protecting the people from enemies.

कृषीवलः काडङ्गरेभ्यः सस्यं रक्षति।

The peasant is protecting the crops from insects.

शङ्करः मार्कण्डेयं मृत्योः रक्षति।

Siva protects Markandeya from Yama.

5. The Ablative case is used in the sense of "disgust from", "retiring from" "shirking from"

दुर्जनाः अत्याचारात् न जुगुप्सन्ते।

The wicked do not have disgust from sinful acts.

आचार्यः पाठात् विरमति।

The teacher retires from teaching.

कार्मिकाः सायं कर्मणः विरमन्ति।

The workers retire from work in the evening.

सत्यात् धर्मात् च न प्रमदितव्यम्।

One should not swerve from truth and duty.

मूढः कर्तव्यात् प्रमाद्यति, ततः क्लेशं अनुभवति।

A fool is shirking from duty. Therefore he undergoes suffering.

6. Ablative case is used in the sense of distinguishing one from the other.

हिमालयः अन्येभ्यः गिरिभ्यः उत्तमः।

The Himalayas is taller than other mountains.

नारिकेलः अन्येभ्यः तरुभ्यः उन्नतः ।

The coconut tree is taller than other trees.

समुद्रः तडागादपि विशालः अगाधश्च ।

The ocean is broader than the pond, deeper as well.

Conjugation of Ablative forms.

| | | | |
|---|---|---|---|
| Mas. | हस्तात् (from the hand) | हस्ताभ्यां | हस्तेभ्यः |
| | वृक्षात् (from tree) | वृक्षाभ्यां | वृक्षेभ्यः |
| | समुद्रात् (from ocean) | समुद्राभ्यां | समुद्रेभ्यः |
| | गिरेः (from hill) | गिरिभ्यां | गिरिभ्यः |
| | हरेः (from Hari) | हरिभ्यां | हरिभ्यः |
| | रवेः (from Ravi) | रविभ्यां | रविभ्यः |
| | तरोः (from tree) | तरुभ्यां | तरुभ्यः |
| | शत्रोः (from enemy) | शत्रुभ्यां | शत्रुभ्यः |
| | बन्धोः (from relative) | बन्धुभ्यां | बन्धुभ्यः |
| Fem. | रमायाः (from Rama) | रमाभ्यां | रमाभ्यः |
| | मत्याः, मतेः (from intellect) | मतिभ्यां | मतिभ्यः |
| | नद्याः (from river) | नदीभ्यां | नदीभ्यः |
| | धेन्वाः, धेनोः (from cow) | धेनुभ्यां | धेनुभ्यः |
| | वध्वाः (from bride) | वधूभ्यां | वधूभ्यः |
| Neu. | वनात् (from forest) | वनाभ्यां | वनेभ्यः |
| | वारिणः (from water) | वारिभ्यां | वारिभ्यः |
| | मधुनः (from honey) | मधुभ्यां | मधुभ्यः |

| | | | |
|---|---|---|---|
| | मत् (from me) | आवाभ्यां | अस्मत् |
| | त्वत् (from you) | युवाभ्यां | युष्मत् |
| Mas. | तस्मात् (from him) | ताभ्यां | तेभ्यः |
| Fem. | तस्याः (from her) | ताभ्यां | ताभ्यः |
| Mas. | अस्मात् (from him) | आभ्यां | एभ्यः |
| Fem. | अस्याः (from her) | आभ्यां | आभ्यः |
| Mas. | एतस्मात् (from this) | एताभ्यां | एतेभ्यः |
| Fem. | एतस्याः (from this) | एताभ्यां | एताभ्यः |
| Mas. | कस्मात् (from whom) | काभ्यां | केभ्यः |
| Fem. | कस्याः (from whom) | काभ्यां | काभ्यः |

Ex. I. Translate into English.

1. रामः प्रतिदिनं प्रातः गृहात् वनं गच्छति।
२. वृक्षेभ्यः पर्णानि, फलानि च अधः पतन्ति।
३. अहं कूपात् जलं आनयामि।
४. हस्ताभ्यां पुस्तकानि पतन्ति।
५. तौ पर्वतात् अवतरतः।
६. छात्राः सायं पाठशालायाः गृहं प्रत्यागच्छन्ति।
७. कस्मात् त्वं अत्र आगच्छसि ?

II. Translate into English.

1. कस्मात् पुष्पाणि पतन्ति ?
२. वृक्षात् पुष्पाणि पतन्ति।
३. जनाः कुतः तत्र गच्छन्ति ?

४. जनाः गृहात् तत्र गच्छन्ति।

५. नृपाः केभ्यः जनान् रक्षन्ति ?

६. नृपाः शत्रुभ्यः जनान् रक्षन्ति।

Note : वहिः (out of) ऋते (except) govern a noun in Ablative case.

ते ग्रामात् बहिः वसन्ति।

त्वत् ऋते बालकाः सायं क्रीडन्ति।

III. Conjugate the following words in Ablative case.

देवः, करः, मयूरः, उटजः, बालाः, सुता, वनम्, आसनम्, धनम्, फलं

IV. Translate into English.

पादपानां भयं वातात्, पद्मानां शिशिरात् भयम्।
पर्वतानां भयं वज्रात् साधूनां दुर्जनात् भयम्॥

V. Fill up the blanks with Ablative case form of words given within the brackets and Translate.

1. धेनुः (व्याघ्र) त्रस्यति।

२. (पात्र) जलं स्रवति।

३. सः (पीठ) उत्तिष्ठति।

४. हरिः भक्तान् (दुःख) रक्षति।

५. (बन्धु) आशीर्वादपत्राणि आगच्छन्ति।

६. धीरः (शत्रु) न त्रस्यति।

VI. Translate into Sanskrit.

1. I am coming from Sriranga.

2. You both are coming down (अवतरथः) from the hill.
3. He is bringing water from the well.
4. A letter has come from Sankara.
5. You are bringing books from the teacher.
6. We both go to the well every morning from home for bathing.
7. The stars fall from the sky.
8. The students are getting up from the beds.
9. They are bringing flowers from the creepers.
10. The letter has not come from the father.
11. They are going from village to village everyday.
12. Boys and girls are playing out side ( "from") the school.
13. You are speaking everything except truth.
14. Why are you living out side ( "from") the city.

# एकविंशः पाठः — Lesson - 21

### VI Case : Genetive Case

Genetive case has the significance of "possession"

इदं रामस्य गृहम्।

This is Rama's house.

सीता रामस्य पत्नी।

Sita is Rama's wife.

रामः कुशलवयोः पिता।

Rama is the father of Kusa and Lava.

नासिका नेत्रयोः मध्ये अस्ति।

The nose lies in middle of two eyes.

गुरुः शिष्याणां विजयेन तुष्यति।

The teacher rejoices by the victory of the disciples.

सुग्रीवः वानराणां राजा।

Sugriva is the king of monkeys.

राममूर्तेः गृहं कुत्र अस्ति ?
Where is Ramamurti's house ?

लक्ष्मीः क्षीराब्धेः पुत्री।
Lakshmi lies the daughter of Milky ocean.

आर्यावर्तः हिमगिरिविन्ध्यगिर्योः मध्ये अस्ति।
Aryavarta lies in the middle of Vindhyas.

जननी शिश्वोः क्रीडनं पश्यति।

Mother sees the play of the two children.

नृपतयः कवीनां संमानं कुर्वन्ति।

The kings give gifts to poets.

क्रीडाङ्गणे बालानां स्पर्धा चलति।

The competition of the boys is taking place in the playground.

| | | |
|---|---|---|
| Mas. रामस्य (of Rama) | रामयोः | रामाणां |
| शिष्यस्य (of the disciple) | शिष्ययोः | शिष्याणां |
| वानरस्य (of the monkey) | वानरयोः | वानराणां |
| क्षीराब्धेः (of the milky ocean) | क्षीराब्ध्योः | क्षीराब्धीनां |
| राममूर्तेः (of Ramamurti) | राममूर्त्योः | राममूर्तीनां |

| | | | |
|---|---|---|---|
| | कवेः (of poet) | कव्योः | कवीनां |
| | गुरोः (of teacher) | गुर्वोः | गुरूणां |
| | बन्धोः (of relative) | बन्ध्वोः | बन्धूनां |
| | भानोः (of sun) | भान्वोः | भानूनां |
| Fem. | रमायाः (of Rama) | रमयोः | रमाणां |
| | मत्या, मतेः (of intellect) | मत्योः | मतीनां |
| | नद्याः (of river) | नद्योः | नदीनां |
| | धेन्वाः, धेनोः (of cow) | धेन्वोः | धेनूनां |
| | वध्वाः (of bride) | वध्वोः | वधूनां |
| Neu. | वनस्य (of forest) | वनयोः | वनानां |
| | वारिणः (of water) | वारिणोः | वारीणां |
| | मधुनः (of honey) | मधुनोः | मधूनां |
| | मम, मे (my) | आवयोः, नौ | अस्माकं, नः |
| | तव, ते (your) | युवयोः, वां | युष्माकं, वः |
| | तस्य (his) | तयोः | तेषां |
| | तस्याः (her) | तयोः | तासां |
| | अस्य of this (man) | अनयोः, एनयोः | एषां |
| | अस्याः of this (lady) | अनयोः, एनयोः | आसां |
| | एतस्य of this person | एतयोः, एनयोः | एतेषां |
| | एतस्याः of this lady | एतयोः, एनयोः | एतासां |
| Mas. | कस्य whose | कयोः | केषां |
| Fem. | कस्याः whose | कयोः | कासां |

I. Fill up the blanks with sixth case forms of words given within brackets & Translate.

कृष्णः (वसुदेव) पुत्रः ।

दशरथः (रामलक्ष्मण) पिता ।

उमा (हिमगिरि) तनया ।

अयं (वाल्मीकि) आश्रमः ।

इदं (गुरु) अपवरकम् ।

इमानि (शिशु) क्रीडनकानि ।

II. Translate into Sanskrit.

1. He is Rama's brother.

2. Jatayu is Dasaratha's friend.

3. Pandavas are Pandu's sons.

4. This is Hari's book.

5. We are going to teacher's house.

6. Bhishma is the grandfather of Kauravas and Pandavas.

(अनुजः - younger brother, वयस्यः - friend, पितामहः - grandfather)



# द्वाविंशः पाठः — Lesson - 22

VII Case : Locative case

The locative case stands for the prepositions "in, on, at, about and among"

जनकः गृहे अस्ति ।

Father is in the house.

रसखण्डे माधुर्यं अस्ति ।

There is sweetness in sugarcandy.

रविवर्मा चित्रलेखने समर्थः ।

Ravivarma is an expert in painting.

जनाः ग्रामे नगरे वा वसन्ति ।

People live in village or town.

गजाः अरण्येषु वसन्ति ।

Elephants live in forests.

बालः आचार्यस्य पादयोः नमस्करोति ।

The boy bows at the (two) feet of the teacher.

पात्रेषु जलं नास्ति । (न + अस्ति)

There is no water in the vessels.

तिले तैलं अस्ति ।

There is oil in the sesame.

तैले स्नेहः अस्ति ।

There is stickiness in oil.

सर्वत्र ईश्वरः अस्ति ।

God is everywhere.

उदधौ तिमिङ्गिलाः चरन्ति ।

Whales move in ocean.

पाण्योः अंगुलयः सन्ति ।

There are fingers in (two) hands.

गिरिषु गुहाः सन्ति ।

There are caves in mountains.

रामुः गणिते निपुणः ।

Ramu is an expert in Mathematics.

माणवकस्य गुरुषु अधिका प्रीतिः ।

There is immense love for the student (use Genetive) in the teacher.

अहं बन्धुषु स्निह्यामि ।

I have love "in" relatives.

| | | | |
|---|---|---|---|
| Mas. | ग्रामे in village | ग्रामयोः | ग्रामेषु |
| | अरण्ये in forest | अरण्ययोः | अरण्येषु |
| | पादे in foot | पादयोः | पादेषु |
| | उदधौ in ocean | उदध्योः | उदधिषु |
| | पाणौ in foot | पाण्योः | पाणिषु |
| | गिरौ in hill | गिर्योः | गिरिषु |
| | गुरौ in teacher | गुर्वोः | गुरुषु |
| | बन्धौ in relative | बन्ध्वोः | बन्धुषु |
| | शत्रौ in enemy | शत्र्वोः | शत्रुषु |
| Fem. | रमायां in Rama | रमयोः | रमासु |
| | मत्यां, मतौ in intellect | मत्योः | मतिषु |
| | नद्यां in river | नद्योः | नदीषु |
| | धेन्वां, धेनौ in cow | धेन्वोः | धेनुषु |
| | वध्वां in bride | वध्वोः | वधूषु |
| Neu. | वने in forest | वनयोः | वनेषु |
| | वारिणि in water | वारिणोः | वारिषु |

| | | |
|---|---|---|
| मधुनि in honey | मधुनोः | मधुषु |
| मयि in me | आवयोः | अस्मासु |
| त्वयि in you | युवयोः | युष्मासु |
| तस्मिन् in him | तयोः | तेषु |
| तस्यां in her | तयोः | तासु |
| अस्मिन् in this (Man) | अनयोः | एषु |
| अस्यां in this (lady) | अनयोः | आसु |
| एतस्मिन् in this (man) | एतयोः, एनयोः | एतेषु |
| एतस्यां in this (lady) | एतयोः, एनयोः | एतासु |
| कस्मिन् in whom (man) | कयोः | केषु |
| कस्यां in whom (fem) | कयोः | कासु |

I Translate into Sanskrit.

1. People live in cities.
2. Lotuses bloom in the ponds.
3. I read lessons 'in' the book.
4. You are living in a city.
5. Do you have taste in Mathematics or in Science ?
6. Lord Vignesvara has taste in 'modaka' (a sweetmeat), Kapittha fruit and jambu fruit.
7. How many fingers are there in hands ?
8. How many fingers are there in legs ?
9. He is filling up water in the vessels.
10. Sakuntala is the best among dramas.

अधिकं - much, कमलानि - lotuses, वा - or, च - and, कति - how many, पूरयामि - fill up, श्रेष्ठः - best, रुचिः - taste.

II Fill up the blanks with Locative case forms of words given within brackets and Translate.

1. माता (पुत्र) स्निह्यति।
2. (पर्वत) वृक्षाः सन्ति।
3. मुनयः (आश्रम) वसन्ति।
4. मार्कण्डेयस्य (शिव) भक्तिः।
5. प्रह्लादस्य (विष्णु) भक्तिः।
6. मम गुरुः (विज्ञान) निपुणः।
7. हिमालयः (गिरि) उन्नतः।
8. मृगाणां (पाद) खुराः सन्ति।
9. वयं (कर्ण) कुण्डले धरामः।
10. ईश्वरः (दीन) दयां करोति।

# त्रयोविंशः पाठः — Lesson 23

### VIII case - Vocative case

### संबोधन—प्रथमा

The vocative case forms are used for calling or addressing persons (Eg : Oh ! Rama ! Oh, child, Oh ! student) The Vocative forms are generally used with imperative mood verbal forms. The imperative forms indicate order or sometimes a forceful request too. They are effectively used in II person forms, as for example in, "Rama, come here" or in III person forms like "Let him bring water" or "Let her sing a song". In the I person it has a little more force as in 'I have to read lessons' or 'We have to go to school' The personal pronoun forms and the corresponding imperative forms are given below. Please match them and learn the structure.

| | | | | | |
|---|---|---|---|---|---|
| अहं | आवां | वयं | पठानि | पठाव | पठाम |
| त्वं | युवां | यूयं | पठ | पठतं | पठत |
| सः | तौ | ते | | | |
| सा | ते | ताः | पठतु | पठतां | पठन्तु |
| तत् | ते | तानि | | | |

अहं पठानि – I have to read.

आवां पठाव – We (two) have to read.

वयं पठाम – All of us have to read.

त्वं पठ – You read.

युवां पठतं – You both read.

यूयं पठत – You (all) read.

सः-सा-तत् पठतु – Let He/She/It read.

तौ-ते-ते पठतां – Let them both read.

ते-ताः-तानि पठन्तु – Let them read.

I Make sentences with the following verbal forms :

| | | |
|---|---|---|
| पश्यानि | पश्याव | पश्याम |
| लिखानि | लिखाव | लिखाम |
| वसानि | वसाव | वसाम |
| गच्छानि | गच्छाव | गच्छाम |
| चराणि | चराव | चराम |

Observe the sentences.

1. राम ! त्वं पठ।

   Rama ! you read.

2. बालौ ! युवां पुष्पाणि पश्यतम्।

Boys ! (two) you both see the flowers.

3. वीराः ! यूयं सीमान्तं रक्षत।

Brave men ! All of you protect the borders.

Vocative case forms.

| | | |
|---|---|---|
| राम | रामौ | रामाः |
| रमे | रमे | रमाः |
| वन | वने | वनानि |
| हरे | हरी | हरयः |
| मते | मत्यौ | मतयः |
| नदि | नद्यौ | नद्यः |
| जननि | जनन्यौ | जनन्यः |
| श्रीः | श्रियौ | श्रियः |
| वारि-वारे | वारिणी | वारीणि |
| दधि-दधे | दधिनी | दधीनि |
| शंभो | शंभू | शंभवः |
| धेनो | धेनू | धेनवः |
| वधूः | वध्वौ | वध्वः |

—★—

## चतुर्विंशः पाठः – (Revision 2)

Sentence structure (Revision 2)

Note the verbal forms of the root अस् to be

अस्ति स्तः सन्ति III person

असि स्थः स्थ II person

अस्मि स्वः स्मः I person

अस्ति He is, असि you are, अस्मि I am

Translate the following sentences into English and compare with the key given in the end.

1. सः कुत्र अस्ति ?

2. त्वं कुत्र असि ?

3. अहं कुत्र अस्मि ?

4. ते तत्र न सन्ति ?

5. यूयं कुत्र स्थ ?

6. वयं अत्र न स्मः ।

7. सः किं हसति ?

8. त्वं किमर्थं हससि ?

9. युवां वृथा हसथः ।

10. अहं गुरुं नमामि ।

11. वयं देवं नमामः ।

12. सुप्रभातं रमेश !

13. भो आर्य ! सुदिनम् ।

14. अन्तः आगच्छ ।

15. कुतः बहिः तिष्ठसि ?

16. अपि कुशलम् ?

17. आं, सर्वत्र कुशलम् ।

18. कुत्र वससि ?

19. मित्रस्य गृहे ।

20. प्रातराशः सज्जः ।

21. आगच्छ । सह खादावः ।

22. इदं वार्तापत्रं पठ ।

23. अहं शीघ्रं आगच्छामि ।

24. चतुष्पदे सुखं उपविश ।

25. अहं अन्तः गच्छामि ।

26. सः तत्र तिष्ठतु ।

27. इदानीं का वेला ?

28. प्रातः सप्तमी होरा ।

29. सः विलंबं करोति ।

30. त्वं विलंबं मा कुरु ।

31. पुनः मिलामः ।

32. अभिवादये ।

33. आपृच्छे ।

34. उपाहारगृहं कुत्र वर्तते ?

35. उपाहारगृहं समीपे एव वर्तते ।

36. त्वं कुत्र गच्छसि ?

37. अहं क्रीडाङ्गणं गच्छामि ।

38. कृपया क्षमस्व ।

39. अहं क्षन्तव्यः ।

40. चिन्ता मा अस्तु ।

41. मा शुचः ।

42. आर्य ! वन्दे ।

43. आर्ये ! नमस्ते ।

44. महाशय ! कुत आगच्छसि ।

45. महाशये । अहं तञ्जापुरात् आगच्छामि ।

46. आर्य ! सुसायमहः ।

47. महोदय ! सुरात्रिः ।

48. धन्यः अस्मि । (धन्योऽस्मि)

49. धन्या अस्मि ।

50. कृतज्ञः अस्मि ।

51. कृतज्ञा अस्मि ।

52. अनुगृहीतः अस्मि - अनुगृहीतोऽस्मि ।

53. शिवः मार्गः भवतु । - शिवो मार्गो भवतु । शिवाः ते पन्थानः सन्तु ।

54. ते यात्रा निर्विघ्ना भवतु ।

55. सुकृतं अस्तु ।

56. शुभं अस्तु । स्वस्ति अस्तु ।

57. विजय कुमार ! कुतः आगच्छसि ।

58. मैथिलि ! विद्याशालातः ।

59. विजयकुमार ! तव हस्ते घटी अस्ति वा ?

60. कति होराः गताः ?

61. इदानीं समयः कः ?

62. सायं पञ्चमहोरातः परं पञ्च निमेषाः ।

63. मध्याह्ने द्वादशहोरातः पूर्वं विंशतिः निमेषाः ।

64. खेलाङ्गणं गतः किम् ?
65. नहि। श्वः परीक्षा।
66. व्यायामं करोषि किम् ?
67. प्रतिदिनं सायं व्यायामं करोमि।
68. किं तुभ्यं व्यायामः रोचते ?
69. क्रीडातः व्यायामं रोचये।
70. कदा तव विरामः ?
71. वर्षारम्भात्।
72. कति दिनानि यावत् विरामः ?
73. दश दिनानि यावत्।
74. विरामं कथं नयसि ?
75. अग्रे परीक्षा आगच्छति।
76. ततः पठन् अस्मि।
77. नीचैः तिष्ठ।
78. उच्चैः आरोह।
79. बहिः मा गच्छ।
80. शनैः शनैः चल।
81. मन्दं मन्दं कुरु।
82. शीघ्रं चल।
83. तत्र मा गच्छ।
84. सर्वत्र मा विचर।
85. एकत्र एव तिष्ठ।

86. सः यत्र कुत्र अपि गच्छति।

# Lesson - 24

## Key

1. Where is he ?
2. Where are you ?
3. Where am I ?
4. They are not there.
5. Where are you (plu.) ?
6. We are not there.
7. Is he laughing ?
8. Why are you laughing ?
9. You are laughing purposelessly.
10. I salute the teacher.
11. We salute the God.
12. Ramesh ! good morning.
13. Oh ! Sir ! Good day.
14. Come in.
15. Why are you standing out ?
16. Are you fine ?
17. Yes, fine everywhere (everybody is fine)
18. Where do you live ?
19. In the friend's house.
20. The breakfast is ready.
21. Come. Let us eat together.
22. Read this Newspaper.
23. I am coming quickly.
24. Sit comfortably in the chair.
25. I am going in.
26. Let him remain there.
27. What is the time now ?

28. 7'o' clock in the morning.
29. He is causing delay.
30. Do not cause delay.
31. Let us meet again.
32. I salute.
33. I take leave.
34. Where is the canteen ?
35. The canteen is nearby.
36. Where do you go ?
37. I am going to the playground.
38. Please excuse (me)
39.I am fit to be excused.
40. Do not worry.
41. Do not grieve.
42. Sir, I salute.
43. Madam ! salutations to you.
44. Noble Sir ! Wherefrom are you coming ?
45. Noble Madam ! I am coming from Tanjore.
46. Sir, Good evening !
47. Sir, Good night !
48. I am thankful (Masc. form)
49. I am thankful (Fem. form)
50. I am grateful (Masc. form)
51. I am grateful (Fem. form)
52. I am favoured.
53. Good bye (literally, let your path be auspicious)
54. May your journey be free from impediments.
55. Good luck.
56. Let there be auspiciousness.
57. Vijayakumara ! Where from are you coming ?

58. Maithili, from the school.
59. Vijayakumara ! Is there a watch in your hand ? (Do you have a watch)
60. How many hours have passed ? (What is the time ?)
61. What is the time now ?
62. Five minutes past 5 o' clock in the evening.
63. Twenty minutes to 12 o' clock noon.
64. Have you gone to playground ?
65. No. (There is) exams tomorrow.
66. Do you perform exercise ?
67. I do the exercise every evening.
68. Do you like exercise ?
69. I prefer exercise to play.
70. When is your holiday ?
71. From the New year.
72. How many days of holidays ?
73. Ten days.
74. How do you spend holidays ?
75. The examinations come after that.
76. Therefore I keep reading.
77. Stand down here.
78. Climb up.
79. Do not go out.
80. Move slowly.
81. Do (it) ,slowly.
82. Walk fast.
83. Do not go there.
84. Do not wander everywhere.
85. Stand at one place.
86. He goes somewhere.

# पञ्चविंशः पाठः — Lesson 25

## Sentence Structure

Each language has got its own specialities. This has to be borne in mind while translating from one language to the other. Translate the following sentences into English. Refer to the key given at the end of the exercise after completing the exercise.

1. पद्यां अनुसर।
2. जलं स्पृश।
3. पादौ क्षालय।
4. सोपानं आरोह।
5. धर्मं चर।
6. शतं जीव।
7. दीर्घायुः भव।
8. शुभं आचर।
9. अशुभं त्यज।
10. भद्रं पश्य
11. भद्रं शृणु।
12. भद्रं वद। अभद्रं मा वद।
13. पाठशालां प्रविश।
14. गर्वं त्यज।
15. विनयं दर्शय।
16. गृहं गच्छ।
17. पुस्तकं पठ।

18. पत्रं लिख।

19. फलं खाद।

20. दुग्धं पिब।

21. एकाकी नदीं मा गच्छ।

22. सत्यं वद।

23. पुष्पं जिघ्र।

24. अत्र तं न आनय।

25. तत्र एव तं नय।

26. पुस्तकं गृहं नय।

27. मोहनः गृहं प्रविशति।

28. सः कवाटं पिदधाति।

29. त्वं अर्गलं निधेहि।

30. सः मार्गं रुणद्धि।

31. राजुः तत्र पुस्तकं पठति।

32. सीता जलं गृहं आनयति।

33. हरिः फलं तत्र नयति।

34. यः अनृतं वदति सः दुःखं अनुभवति।

35. रामः सदा ऋतं आचरति।

36. सः सत्यं भाषते।

37. राधा सत्यं वदति। असत्यं न वदति।

38. हरिः क्षेत्रं पालयति, ततः तत्र वसति।

39. बालः सदा क्रीडति।

40. इदं जलं अशुचि, ततः एतत् मा स्पृश।

41. राम ! त्वं कुत्र गच्छसि ?

42. वासो ! अहं क्रीडाङ्गणं गच्छामि।

43. अश्वः किं खादति ? किं पिबति ?

44 अश्वः घासं खादति, निर्मलं जलं पिबति।

45 गजः किं खादति ?

46 गजः अन्नं फलानि नारिकेलपत्राणि च खादति।

47 त्वं यानं आरोह।

48 एतत् महायानं पत्तनं गच्छति।

49 आचार्यः बालं प्रश्नं पृच्छति।

50 त्वं प्रश्नं पृच्छ।

51 अहं अनुपदं उत्तरं वदामि।

52 रथं पश्यामि।

53 वाहनं आरोहामि।

54 जननी अन्नं पचति।

55 अहं संस्कृतं वदामि।

56 त्वं भोजनं स्वीकुरु।

57 आचारः सुखं ददाति।

58 धनं विना नरः न प्रकाशते।

59 जलं विना पद्मं न रोहति।

60 मां विना पुत्रः न गच्छति।

61 जलं विना नरः न जीवति।

62 रविं नम।

63 रामुं व्याधिः पीडयति।

64 स्तेनः धनं चोरयति।

65 कपिः वृक्षं आरोहति।

66 अग्निः पलालं दहति।

67 नृपतिः शत्रुं जयति।

68 अतिथिः गृहं आगच्छति।

69 अहं सूर्यं वन्दे।

70 रामः कुसुमं क्रीणाति।

71 सिंहः हरिणं हन्ति।

72 शिक्षकः देहव्यायामं बोधयति।

73 बुधः असत्यं न वदति।

74 अहं नारिकेलोदकं पिबामि।

75 व्याघ्रः मांसं खादति।

76 बालकः शष्कुलीं भक्षयति।

77 सः घृतं लिहति।

78 गजः जलं चूषति।

79 बिडालः क्षीरं लिहति।

80 साधुः कदलीफलं अत्ति।

81 जनकः पुत्रं क्षाम्यति।

82 कण्टकः पादं विध्यति।

83 भृत्यः भारं वहति।

84 मूर्खः बुधं निन्दति।

85 कृषकः धान्यं वपति।

86 कृषीवलः क्षेत्रं कृषति।

87 इदं मधुरं दुग्धम्, इदं पिब।

88 इदं रम्यं आभरणं, इदं धारय।

89 इमे मधुराः शालयः, इमान् पच।

90 राहुः सूर्यं ग्रसते।

91 दुःखं मां बाधते।

92 कपिः गिरिं लङ्घते।

93 पापं कर्म दुःखं ददाति।

94 शिष्यः गुरुं अनुचरति।

95 बालः पितरं अनुसरति।

96 सीता रामं अनुवदति।

97 नृपः राज्यं अधिकरोति।

98 विद्या ज्ञानं दीपयति।

99 कन्या शरीरं अलङ्करोति।

100 विज्ञानी विमानं आविष्करोति।

101 यतिः धनं न स्वीकरोति।

102 रामुः गोपालं अनुकरोति।

103 विद्वान् छलं परिहरति।

104 साधुः सत्यं व्याहरति।

105 पत्नी पतिं अनुनयति।

106 रामः सीतां परिणयति।

107 कम्बः रामायणं प्रणयति।

108 लक्ष्मणः शत्रुं अपनयति।

109 पिता पुत्रं उपनयति।

110 गुरुः शिष्यं विनयति।

111 विश्वनाथः गुरुं सेवते।

112 सिंहः वनं गाहते।

113 छात्रः तटाकं गाहते।

114 मेधावी दुःखं सहते।

115 त्वं फलानि वितर।

116 अहं नदीं तरामि।

117 गिरिं निकषा कपयः चरन्ति।

118 अजः तृणं चरति।

119 नृपः दुर्जनं शत दण्डयति।

120 तण्डुलान् ओदनं पचति।

II Translate into English.

इदं पत्रं नय। तत् फलं इह आनय।

रामः इह तिष्ठति। कृष्णः तत्र वसति।

अत्र एव त्वं वससि। रामः सदा अटति।

मन्दं मन्दं सा चलति। एषा शीघ्रं गच्छति।

मोहनः द्रुतं धावति। कृष्णः मन्दं धावति।

सा सत्यं वदति। एषः अनृतं सदा वदति।

सः गृहं एव आगच्छति, वनं न गच्छति।

एषा क्षीरं एव पिबति, अन्नं न खादति।

गुरुः प्रश्नं पृच्छति। शिष्यः उत्तरं यच्छति।

अहं सत्यं व्याहरामि, अनृतं न वदामि।

तौ क्षीरं पिबतः, फलं खादतः, बहिः चरतः च।

बालं गृहं नय। सः रोदिति।

बालं प्रश्नं पृच्छामि। सः उत्तरं वदति।

अटति wanders

| | |
|---|---|
| मन्दं मन्दं | slowly |
| प्रश्नः | question |
| उत्तरं | answer |
| पृच्छति | He asks |
| द्रुतं, शीघ्रं | fast |
| व्याहरामि | I speak |
| रोदिति | (He) cries |

## Lesson - 25

### Key

1. Follow the footpath.
2. Touch the water.
3. Cleanse the feet.
4. Climb the staircase.
5. Follow virtue.
6. Live for hundred (years).
7. Live long.
8. Practice auspiciousness.

9. Abandon inauspiciousness.
10. See good.
11. Hear good.
12. Speak good. Do not speak bad
13. Enter school.
14. Abandon pride.
15. Show modesty.
16. Go home.
17. Read book.
18. Write letter.
19. Eat fruit.
20. Drink milk.
21. Do not go to the river alone.
22. Speak truth.
23. Smell flower.
24. Do not bring him here.
25. Take him only there.
26. Take home the book.
27. Mohan enters home.
28. He is closing the door.
29. You fasten the bolt.
30. He is blocking the path.
31. Raju is reading the book there.
32. Sita is bringing water to the house.
33. Hari is taking the fruits there.
34. He who speaks falsehood, experiences misery.
35. Rama always adopts straightforwardness.
36. He speaks the truth.
37. Radha speaks truth, does not speak falsehood.
38. Hari guards the field. So he lives there.

39. The boy always plays.
40. This water is impure. Therefore do not touch it.
41. Rama ! Where are you going ?
42. Vasu, I am going to the playground.
43. What does the horse eat ? What does it drink ?
44. The horse eats grass, drinks pure water.
45. What does the elephant eat ?
46. The elephant eats rice, fruits and coconut leaves.
47. You ascend the vehicle.
48. This bus goes to the town.
49. The teacher asks the boy a question.
50. You ask the question.
51. I am giving the reply instantly.
52. I see the chariot.
53. I ascend the the vehicle.
54. Mother cooks food.
55. I speak Sanskrit.
56. You accept the food.
57. Good conduct gives happiness.
58. Man does not shine without money.
59. The lotus does not grow without water.
60. The son does not go without me.
61. Man does not live without water.
62. Salute the sun.
63. Disease afflicts Ramu.
64. The thief steals money.
65. The monkey climbs the tree.
66. Fire burns the rubbish.
67. The king conquers the enemy.
68. The guest comes home.

69. I salute the sun.
70. Rama buys flower.
71. The lion kills the deer.
72. The instructor teaches the exercises.
73. Wiseman does not speak falsehood.
74. I drink coconut water.
75. The tiger eats the flesh.
76. The boy eats the snacks (Murukku).
77. He licks the ghee.
78. The elephant sips water.
79. The cat licks the milk.
80. The nobleman eats plaintain.
81. The father excuses the son.
82. The thorn pricks the foot.
83. The servant bears the load.
84. The fool condemns the wiseman.
85. The farmer sows the seeds.
86. The peasant ploughs the field.
87. This is sweet milk, drink it.
88. This is a beautiful ornament. Wear it.
89. These are good rice. Cook them.
90. Rahu catches the sun.
91. Misery affects me.
92. The monkey crosses the hill.
93. Sinful deed brings misery.
94. The disciple follows the teacher.
95. The boy follows the father.
96. Sita speaks following Rama.
97. The king rules the kingdom.
98. Learning kindles knowledge.

99. The girl adorns her body.
100. The scientist creates an aeroplane.
101. The holyman does not take money.
102. Ramu follows Gopala in action.
103. The learned man avoids deceit.
104. The noble man speaks truth.
105. The wife pacifies the husband.
106. Rama marries Sita.
107. Kamba composes Ramayana.
108. Lakshmana despatches the enemy.
109. Father brings the son near.
110. The teacher trains the disciple.
111. Visvanatha serves the teacher.
112. The lion enters the forest.
113. The student enters the pond.
114. A wiseman bears the misery.
115. You distribute the fruits.
116. I cross the river.
117. The monkeys move about in the proximity of the hill.
118. The goat moves about for grass.
119. The king punishes the wicked man (with) hundred (rupees).
120. She cooks the rice as food.



## षड्विंश पाठः — Lesson 26

त्वं - भवान् - You - You (Honour)

The usual second person Singular personal pronoun in Sanskrit is त्वं. In addition to this we also have an honorofic term भवान् which is used for addressing

respectable persons and elders in Masculine Gender. The corresponding feminine form is भवती. But while using these forms, the verbal form should be in Third person. Example :

भवान् अत्र फलं आनयति । You are bringing a fruit here.

भवती विद्यालयं गच्छति । You (Fem.) are going to the school.

भवत्या सह अहं अपि आगच्छामि । I am also coming along with you (fem.).

भवन्तं अहं अनुसरामि । I am following you.

भवतीं सः तत्र नयति । He is taking you (Fem.) there.

भवता सह रामः क्रीडति । Rama plays with you.

It may be noted that भवान् and भवती govern the verb directly and hence the Third person singular verbal forms are used. While the other case forms of भवान् and भवती are used, the actual subject governs the verb.



## सप्तविंशः पाठः — Lesson 27

Instrumental case - Sentence Structure Translate into English (key is given at the end of the lesson)

1. एषः दक्षिणेन हस्तेन लिखति ।
2 सा वामेन हस्तेन लिखति ।
3 त्वं केन हस्तेन लिखसि ।
4 अहं अनेन एव लिखामि ।
5 अहं पादाभ्यां चलामि ।
6 त्वं दन्तैः इक्षुकाण्डं चर्वसि ।

7 त्वं केन खेलसि ?

8 त्वं कृष्णेन कन्दुकेन क्रीड।

9 दुष्टः बालः शिलाखण्डेन मण्डूकं प्रहरति।

10 जननी पुत्रं हस्ताभ्यां उपगूहते।

11 श्यामः जलेन मुखं प्रक्षालयति।

12 त्वया सह अहं पत्तनं गच्छामि।

13 गुरुः छात्रैः साकं अटति।

14 रामेण विना क्रीडाङ्गणं गच्छामि।

15 श्रमेण धनं सम्पादयति।

16 बुद्धिः विद्यया वर्धते।

17 अलं वेगेन, मन्दं गच्छ।

18 कृष्णेन तुल्यः नरः न अस्ति।

19 कुचेलेन गोविन्दः मैत्रीः भजते।

20 विश्वस्तेन भृत्येन कार्यं निर्वह।

21 दशरथः पुत्रैः पूर्णः अस्ति।

22 कुचेलः धनेन रिक्तः भवति।

23 श्रमेण असाध्यं न अस्ति।

24 अहं अनृतेन लज्जे।

25 धनेन हीनः लज्जते।

26 सः नियमेन पठति।

27 राजा नियमेन राज्यं पालयति।

28 रजकः फेनकेन वस्त्रं शोधयति।

29 माता गुडेन भक्ष्यं करोति ।

30 प्रह्लादः भगवता रक्षितः ।

31 त्वं केन पश्यसि ?

32 अहं नेत्राभ्यां पश्यामि ।

33 सः केन शृणोति ?

34 सः कर्णाभ्यां शृणोति ।

35 अहं दन्तैः दशामि ।

36 सः शष्कुलीं दन्तैः चर्वति ।

37 पेयां जिह्वया लिहसि ।

38 अहं आस्येन नासिकया च श्वसिमि ।

39 सः हस्ताभ्यां पुस्तकं आददाति ।

40 रामः खगं हस्ताभ्यां स्पृशति ।

41 विष्णुः तुलसीं नासिकया जिघ्रति ।

42 अहं पादाभ्यां चलामि ।

43 अहं वाचा वदामि ।

44 सः भुजाभ्यां आलिङ्गति ।

45 अंगुलीभिः रामनाम गणयति ।

46 नासिकया गन्धं अनुभवामि ।

47 माधवः उरसा लक्ष्मीं धरति ।

48 आदिशेषः फणैः पृथिवीं धरति ।

49 चित्रकारः तूलिकया चित्रं लिखति ।

50 भारवाहः शिरसा भारं वहति ।

51 रजकः हस्ताभ्यां वस्त्रं क्षालयति।

52 तक्षकः क्रकचेन वृक्षं भिनत्ति।

53 चोरः पादाभ्यां द्रुतं धावति।

54 गायकः उच्चेन स्वरेण गायति।

55 तन्तवायः तुन्तुभिः पटं वयति।

56 कुब्जः दण्डेन चरति।

57 खञ्जः दण्डेन चलति।

58 अन्धः स्पर्शेन जानाति।

59 मालाकारः पुष्पाणि सूत्रेण ग्रथ्नाति।

60 कुम्भकारः मृत्तिकया घटं तनोति।

61 लोहकारः अग्निना लोहं तापयति।

62 आपणिकः शकटेन वस्तूनि आनयति।

63 चर्मकारः चर्मणा उपानहौ रचयति।

64 गोपालः दण्डेन धेनूः शाद्वलां भूमिं नयति।

65 कर्मकारः श्रद्धया कर्म करोति।

66 सेवकः नियमेन प्रातः इह आगच्छति।

67 कार्यं उद्यमेन सिध्यति।

68 व्याधः वागुरया मृगं नियच्छति।

69 सारथिः अश्वं कशया ताडयति।

70 सीता वीणया गायति।

71 स्वर्णकारः व्रश्चनेन स्वर्णं खण्डयति।

72 यतिः दण्डेन राजते।

73 कितवः अक्षैः दीव्यति।

74 कपिः जवेन उत्पतति।

75 इष्टकाभिः भवनं रचयति।

76 कुञ्चिकया कवाटं उद्घाटयति।

77 कुञ्चिकया तालिकां विबध्नाति।

78 कृपणः मृत्तिकया वित्तं निगूहति।

79 खनित्रेण भूमिं खनति।

80 घरट्टेन तण्डुलं पिनष्टि।

81 ओदनेन क्षुधां शमयति।

82 ऐश्वर्येण अवलेपं भजते।

83 कुंकुमतिलकेन ललाटं शोभते।

84 शिशुः हस्तेन अग्निं स्पृशाति।

85 शिशुं अन्यतः नय।

86 सः कशया अश्वं ताडयति।

87 शकटं चक्राभ्यां चलति।

88 दानेन वैरं नश्यति।

89 बुधः विद्यया लसति।

90 धनेन विहीनं बन्धुः त्यजति।

91 धनेन मानवः श्रमं निस्तरति।

92 सह, साकं, सार्धं, समं सीतया सह/साकं/सार्धं/समं रामः वनं गच्छति।

93 मृगाः मृगैः सह यान्ति।

94 मूर्खाः मूर्खैः सह व्रजन्ति।

95 बुधः बुधेन सह सङ्गच्छते।

96 दुर्जनः दुःखेन जीवति।

97 सज्जनः सुखेन जीवति।

## Key to Lesson 27

1. He is writing with his right hand.
2. She is writing with her left hand
3. With which hand are you writing ?
4. I am writing only with this hand.
5. I move by (with) my legs.
6. You are crushing the sugarcane by your teeth.
7. With whom do you play ?
8. You play (with) ball with Krishna.
9. The mischevous boy is hitting the frog with a stone.
10. The mother is embracing the son with her arms.
11. Syama is cleaning his face with water.
12. I go to the town with you.
13. The teacher is moving about with the students.
14. I am going to the playground without Rama.
15. He earns money by labour.
16. The brain grows by learning.
17. Enough of speed. Go slow.
18. There is no man equal to Krishna.
19. Govinda is seeking friendship with Kucela.
20. Manage the job with a faithful servant.
21. Dasaratha in full (remains satisfied) with his sons.
22. Kucela remains without money.
23. There is nothing impossible with effort.

24. I shy away from falsehood.
25. One without money shies away.
26. He reads systematically.
27. The king protects the kingdom systematically.
28. The washerman washes the clothes with soap.
29. Mother makes sweetmeat with jaggery.
30. Prahlada is protected by God.
31. With what do you see ?
32. I see with my eyes.
33. With what does he hear ?
34. He hears with his ears.
35. I bite with my teeth.
36. He munches the saskuli (a savoury) with his teeth.
37. You lick the gruel with the tongue.
38. I inhale with my mouth and nose.
39. He takes up the book with his hands.
40. Rama touches the bird with his hands.
41. Vishnu smells the Tulasi by his nose.
42. I move by my feet.
43. I speak by words.
44. He embraces with his arms.
45. He counts Rama's name by fingers.
46. I experience smell by my nose.
47. Madhava bears Lakshmi by chest.
48. Adisesha bears the earth by the hoods.
49. The painter paints the portrait by the brush.
50. The porter bears the weight by his head.
51. The washerman is washing the clothes with his hands.
52. The carpenter splits the tree with the saw.
53. The thief runs fast with the feet.

54.The singer sings by (at) the high pitch.
55. The weaver weaves the cloth with yarn.
56. The dwarf walks with the stick.
57. The lame moves with a stick.
58. The blind knows by touch.
59. The garland maker arranges the flowers with the thread.
60. The potter makes the pot with clay.
61. The ironsmith heats the metal by fire.
62. The shop keeper brings things by cart.
63. The cobbler makes the shoes with leather.
64. Gopala is leading the cows to the grassy land by a stick.
65.The worker does his job with sincerity.
66. The servant comes here in the morning systematically.
67. The work gets completed by effort.
68. The hunter binds the deer with the net.
69. The charioteer whips the horse with the whip.
70. Sita sings with Veena.
71. The goldsmith cuts the gold with the cutter.
72. The monk shines with the stick.
73. The gambler gambles with the dice.
74. The monkey jumps with speed.
75. He builds the house with bricks.
76. He opens the door with the key.
77. He locks the lock with the key.
78. The miser hides the money with sand.
79. He digs the ground with spade.
80. He grinds the rice by machine.
81. He quenches hunger with rice food.

82. He gets haughtiness by wealth.
83. The forehead shines by Tilak.
84. The child touches the fire with hand.
85. Take the child away.
86. He beats the horse with the whip.
87. The cart runs by wheels.
88. Enemity disappears by charity.
89. Wiseman shines by learning.
90. The relative discards man without money.
91. Man crosses the crisis with money.

Note. The words सह, समं, साकं and सार्धं are used in the sense of alongwith and they govern a noun with Instrumental case.

92. Rama goes to forest with Sita.
93. The deer go with the deer.
94. The fools move with the fools.
95. The wise gets associated with the wise.
96. The wickedman lives with misery.
97. The goodman lives with happiness.

**Spoken Sanskrit**

अये स्वामिनाथ ! सुप्रभातम्। Swaminatha, good morning

आगच्छ, अन्तः आगच्छ। Come. Come in.

उपविश, का वार्ता ? Sit, what is the news ?

स्वस्ति, आगच्छामि। Good. I shall come

सर्वत्र कुशलम्। It is fine, everywhere.

चिराय त्वं पश्यामि। I am seeing you after a long time.

कदा आगतः ? रात्रौ वा ? When did you come ? In the night?

ह्यः प्रातः एव। Yesterday morning itself.

कुत्र अवसः ? Where did you stay ?

मम सहोदरस्य गृहे। In my brother's house.



## अष्टविंशः पाठः – Lesson 28

Translate the following sentences :

1. खेलनाय कन्दुकं यच्छति।
2. खेलनाय कन्दुकेन अलम्
3. पानाय फलरसः अस्ति।
4. वासाय गृहं सज्जम्।
5. आरोहणाय अश्वः सज्जः।
6. बालकेभ्यः पुस्तकानि वितरति।
7. रामाय फलानि रोचन्ते।
8. लोकाय स्वस्ति भवतु।
9. स्वस्ति प्रजाभ्यः भवतु।
10. याचना माननाशाय।
11. जनः कल्याणाय यतते।
12. तण्डुलाय धनं यच्छति।
13. तिलेभ्यः माषान् प्रयच्छति।
14. फलाय उद्यानं व्रजति।
15. माता पुत्राय न क्रुध्यति।
16. नृपः प्रजायै न द्रुह्यति।
17. मात्रे पित्रे च नमः।

18. अहं जयाय यत्नं करोमि।

19. दानाय फलं क्रीणाति।

### Key to Lesson 28

1. He gives the ball for playing.
2. The ball is enough for playing.
3. There is fruit juice for drinking.
4. The house is ready for living.
5. The horse is ready for ascending.
6. He gives books for the boys.
7. The fruits are to the liking to Rama (Rama likes fruits)
8. Let there be well-being to the world.
9. Let there be well being to the people.
10. Begging (leads) to loss of prestige.
11. Man tries for good.
12. He gives money for (buying) rice.
13. He gives black gram for sesame.
14. He goes to the garden for fruits.
15. The mother is not angry to(wards) the son.
16. The king does not do injustice to people.
17. Salutations to father and mother.
18. I am trying for victory.
19. He buys fruits for giving away.



## एकोनत्रिंशः पाठः - Lesson 29

### Ablative case – Sentence Structure

Translate into English

1. वानरः वृक्षात् अवतरति।

2. बालः ग्रामात् आगच्छति।

3. कामात् क्रोधः जायते।
4. अजीर्णात् ज्वरः जायते।
5. भूमेः लता जायते।
6. रेडियोयन्त्रतः गानं प्रभवति।
7. रावणः रामात् बिभेति।
8. दुष्टः माणवः गुरोः बिभेति।
9. अहं वृष्टेः पुस्तकं रक्षामि।
10. वृश्चिकात् शिशुं रक्षति।
11. नरः अश्वात् पतति।
12. माणवः पीठात् उत्तिष्ठति।
13. चन्द्रः सूर्यात् प्रकाशं लभते।
14. किङ्करः कूपात् जलं आनयति।
15. शृगालात् भयं भवति।
16. नृपः प्रासादात् पश्यति।
17. व्यायामात् बलं भवति।
18. सहपठनात् विद्या स्थिरा भवति।
19. अतिपरिचयात् अवज्ञा भवति।
20. दुग्धात् दधि जायते।
21. पर्जन्यात् अन्नं भवति।
22. दानात् सम्मानं लभते।
23. शिशुः लालनात् प्रीतः भवति।

24. अतिलालनात् बालः दुष्टः भवति।

25. विनयात् बालः साधुः भवति।

26. सन्तोषात् परमं सुखं न अस्ति।

27. अनृतात् परमं पातकं न अस्ति।

28. तृष्णायाः परः व्याधिः न अस्ति।

29. धनात् परमं प्रियं न अस्ति।

30. कुंकुमकेसरं काश्मीरात् उत्पद्यते।

31. कस्तूरी हरिणात् उत्पद्यते।

32. अहं गुरोः व्याकरणं पठामि।

33. वित्तागारात् धनं आददामि।

34. नीचात् नरात् अपसरति।

## Key to Lesson No. 29

1. The monkey is descending from the tree.
2. Balu is coming from village.
3. Anger arises from desire.
4. Fever arises from indigestion.
5. The creeper grows from earth.
6. Music emanates from Radio.
7. Ravana has fear from Rama.
8. The mischevous student has fear from the teacher.
9. I am guarding the book from rain.
10. He saves the child from scorpion.
11. The man falls from the horse.
12. The student rises from the seat.
13. The moon gets light from the sun.
14. The servant brings water from the well.

15. Fear arises from jackal.
16. The king looks from the balcony.
17. Strength arises from exercise.
18. Learning becomes stronger by combined study.
19. Contempt arises from familiarity.
20. Curd arise from milk.
21. Food arises from rain.
22. He gets prestige from charity.
23. The child becomes happy from being petted.
24. The boy becomes wicked from being pampered excessively.
25. The boy becomes good from modesty.
26. There is no greater happiness than contentment.
27. There is no greater sin than falsehood.
28. There is no malady greater than greed.
29. There is no joy greater than money.
30. The saffrom comes from Kashmir.
31. The musk arises from the deer.
32. I am reading grammar from the teacher.
33. I am taking money from the Bank.
34. He goes away from the mean fellow.



# त्रिंशः पाठः - Lesson 30

## Genetive Case Sentence Structure

1 देवदत्तस्य वातातः।

2 रामस्य पुत्रं कुशं जानामि।

3 रामस्य कथा रुचिरा।

4 गङ्गायाः जलं पावनम्।

5 अजः तृणस्य हेतोः चरति।

6 रामुः खाद्यस्य हेतोः अन्नापणं गच्छति।

7 कस्य हेतोः रामः वनं जगाम ?

8 धर्मस्य हेतोः रामः वनं जगाम।

9 राघवस्य दक्षिणतः बिन्दुः तिष्ठति।

10 उच्चविद्यालयस्य उत्तरतः क्रीडाङ्गणम्।

11 प्रेषालयस्य पुरतः अट्टशूलं विद्यते।

12 निम्बस्य फलं तिक्तम्।

13 स्थलकमलस्य गन्धः हृद्यः।

14 जनन्याः स्मरति।

15 छात्राणां श्रेष्ठः पुरस्कारं लभते।

16 एषः गुरुः अध्यापनस्य हेतोः जीवति।

17 त्वं कस्य हेतोः एवं शोचसि ?

18 गुरोः समक्षं अहं न उपविशामि।

19 देशस्य कृते भारती सर्वं अत्यजत्।

20 शिशोः रोदनं बलीयः।

21 तव पुरस्तात् विद्यमानं ग्रन्थं पश्य।

22 बसयानस्य पुरः मा गच्छ।

23 रक्षाभटः रथ्यायाः मध्ये तिष्ठति।

24 सः मार्गेण गच्छतां यानानां गतिं नियमयति।

25 तस्य उपरि छत्रं विद्यते।

26 यानस्य उपरिष्टात् वस्तूनि निदधाति।

27 मम गृहस्य अधः रक्षागारः विद्यते।

28 वृक्षस्य अधस्तात् वयं उपविशामः।

29 तव शयनं सज्जं वा ?

30 आचार्यस्य कक्ष्यायाः बहिः गमनं अनु माणवकाः निर्गच्छन्ति।

31 तव पुस्तकं गृहस्य अन्तः सुरक्षितं विद्यते।

32 भोजनस्य कृते दुष्टः किमपि कुर्यात्।

33 ग्रामस्य समीपं गन्तुं मार्गः नास्ति।

34 सीतायाः पार्श्वं रामः आगच्छति।

35 अस्माकं कक्ष्यायां कृष्णस्य तुल्यः क्रीडावीरः कोऽपि नास्ति।

36 पुत्रस्य भद्रं पिता आकांक्षते।

37 घृतं चक्षुषः आरोग्याय हितं भवति।

38 तव मङ्गलं भूयात्।

39 पद्धावनं पादचारस्य पथ्यम्।

40 अनेन तव किं प्रयोजनम्।

41 जटायोः समक्षं एव रावणः सीतां जहार।

42 अपि तव कुशलम् ?

43 तव दीर्घायुष्यं भूयात्।

44 अपि तव निरामयम् ?

45 ईशः भक्तस्य दयते।

46 सः परीक्षायाः उत्तरणस्य ईष्टे।

47 क्रेता शतस्य दीव्यति।

48 द्यूते शतस्य दीव्यति।

49 मातुः पाकः रुचिरः।

50 हरिः मम सेव्यः।

## Key to Lesson - 30

1 This is Devadatta's kite.
2 I know Rama's son Kusa.
3 Rama's story in interesting.
4 Ganga's water is auspicious.
5 The goat is wandering for grass.
6 Ramu goes to the Hotel for food.
7 For what reason did Rama go to the forest ?
8 Rama went to the forest for the sake of virtue.
9 Bindu is standing on the left of Raghava.
10 There is playground on the north of High school.
11 There is a Hotel in front of the Post Office.
12 The fruit of the neem tree is sour.
13 The smell of the rose is captivating.
14 He fondly remembers the mother.
15 The best among the students gets the prize.
16 This teacher lives only for the sake of teaching.
17 For what reason are you sad ?
18 I do not sit in the presence of my teacher.
19 Bharati sacrificed everything for the sake of the country.
20 The cry of the child is powerful.
21 Look at the text lying in front of you.
22 Do not go in front of the Bus.
23 The policeman is standing at the centre of the road.
24 He is directing the vehicles moving on the road.
25 There is a canopy over him.
26 He is placing the goods on the vehicle.
27 There is a safety room underneath my house.
28 We are sitting underneath the tree.
29 Is your bed ready ?

30 Following the teacher who goes out of the classroom, the students also go out.

31 Your book is safely kept inside the house.

32 The rogue will do anything for the sake of food.

33 There is no way to go near the village.(There is no proper road to the village.)

34 Rama is coming by the side of Sita.

35 There is no sportsman equal to Krishna in our class.

36 The father desires the welfare of the son.

37 The ghee is beneficial for the health of the eye.

38 May there be auspiciousness for you.

39 Cleaning the legs is good for one moving on foot.

40 What is the use for you by this ?

41 Ravana took away Sita in very presence of Jatayu.

42 Are you fine ?

43 May you live long.

44 Are you doing well ?

45 The god in compassionate towards the devotee.

46 He is fit to pass in the examination.

47 The buyer is arguing for hundred.

48 He gambles with hundred.

49 Mother's cooking is tasty.

50 Hari is fit for my worship.



# एकत्रिंशः पाठः - Lesson 31

## Locative Case Sentence Structure

1 अम्बुजं सरसि विकसति ।

2 वानरः द्रुमेषु चरति ।

3 वराहः कर्दमे शेते।

4 कुलीरः पंके सरति।

5 कूश्माण्डः लतायां लम्बते।

6 समुद्रे तरणिः दृश्यते।

7 तटाके पानीयं स्वादु।

8 नद्यां प्रवाहः अतिवेगः।

9 पल्वले सलिलं आविलम्।

10 कूपे मण्डूकः प्लवते।

11 प्रयागे गङ्गा यमुनया सङ्गच्छते।

12 केदारे बीजं वपति।

13 कोटरे खगाः निलीयन्ते।

14 आकाशे गृध्रः डयते।

15 हस्ते पञ्च अंगुलयः सन्ति।

16 गोण्यां व्रीहिं पूरयति।

17 सा घरट्टे तण्डुलं पेषयति।

18 गुर्जरेषु द्वारका विद्यते।

19 मयूरः वर्षासु नृत्यति।

20 तन्द्रालुः सन्ध्यायामपि शेते।

21 रात्रौ चोराः चरन्ति।

22 प्रभाते मङ्गलं वद।

23 भेकाः रात्रौ रटन्ति।

24 नरेषु रामः श्रेष्ठः।

25 षट्सु चत्वारि फलानि त्वं स्वीकुरु।

26 गच्छत्सु धावन् शीघ्रं याति।

27 छात्रेषु रामुः पटुः।

28 लोहेषु कनकं अत्यर्घम्।

29 चर्मणि हरिणः हतः।

30 दन्तयोः गजः हतः।

31 सीतायां धनुः भग्नम्।

32 धेनुषु दुह्यमानासु (सतीषु) गतः।

33 रामे मृगयायै गते (सति) रावणः सीतां अपाहरत्।

34 सूर्ये अस्तं गते (सति) गावः गोष्ठं आगच्छन्ति।

35 विरामकाले समाप्ते (सति) छात्राः विद्याशालां अगच्छन्।

36 अध्यापके कक्षं प्रविष्टे (सति) माणवाः उदतिष्ठन्।

37 जनन्यां आपणं गतायां (सत्यां) भगिनी गृहकर्म करोति।

38 शुभवेलायां आसन्नायां (सत्यां) अहं प्रतिष्ठे।

39 चन्द्रे उदिते (सति) कुमुदं विकसति।

40 पुष्पे स्फुटति (सति) भृङ्गः आगच्छति।

41 रामः जनन्यां साधुः, ताटकायां असाधुः।

42 उपकारिषु सर्वेऽपि साधवः।

43 अपकारिषु यः साधुः सः एव साधुः।

44 अहं पचने आसक्ता।

45 सः कन्दुकक्रीडायां कुशलः।

46 माता सीवने निपुणा।

47 उषा धावने चतुरा।

48 अहं छात्रावासे वसामि।

49 सः तरणकुण्डे तरणं अभ्यस्यति।

50 इयं बालिका मल्लयुद्धे निपुणा।

51 आचार्यः फलके लिखति।

52 अहं मदीये संग्रहपुस्तके प्रतिलिखामि।

53 लेखिन्यां मषी विद्यते।

54 कन्दुकाग्रायां लेखिन्यां मषी अवसिता।

55 संस्कृतं भाषासु मधुरतमं लघुतमं च।

56 नर्मदा नदीषु दीर्घतमा।

57 शृगालः वन्येषु मृगेषु धूर्ततमः।

58 मनोहरः मयि भ्रातृवत् स्निह्यति।

59 गोपालः गाः कीलकेषु बध्नाति।

60 सः व्यवहारे कितवः।

## Key to Lesson No. 31

1 The lotus blossoms in the pond.
2 The monkey moves about on the trees.
3 The pig is lying in the slush.
4 The crab moves in the quagmire.
5 The pumpkin hangs in the creeper.
6 A ship is seen in the sea.
7 Water is sweet in the pond.
8 Flow is fast in the river.
9 The water is muddy in the pond
10 The frog jumps in the well.
11 In Prayag, Ganga unites with Yamuna.
12 He is sowing the seed in the field.
13 The birds disappear into the hollow.

14 The vulture is flying in the sky.
15 There are five fingers in the hands.
16 He fills the paddy in the sack.
17 He is grinding the rice in the grinding machine.
18 Dwaraka is in Gujarat.
19 The peacock dances in the rainy season.
20 The lazyman sleeps even during twilight.
21 The thieves move about in the night.
22 Speak good in the morning.
23 The frogs croak at night.
24 Rama is the best among men.
25 You take four out of six fruits.
26 Among those going, the one running will go quickly.
27 Rama is clever among the students.
28 The gold is valuable among metals.
29 The deer is killed for the skin.
30 The elephant is killed for the tusk.
31 The bow was broken on Sita (for the sake of Sita)
32 He went when the cows were milked.
33 When Rama went after the deer, Ravana carried away Sita.
34 When the sun sets, the cattle return to the shed.
35 When the vacation ended, the students came to school.
36 When the teacher entered the classroom, the students stood up.
37 When mother went to market, (her) sister does the household work.
38 When the auspicious time arrives, I start.
39 When the moon rises, the lillies bloom.
40 When the flowers blossom the bee comes.

41 Rama is nice to mother and harsh to Tataka.
42 All are nice to people who help.
43 He is noble who is nice even towards those who harm him.
44 I am engaged in cooking.
45 He is an adept in ball play.
46 Mother is an adept in stiching.
47 Usha is expert in running.
48 I live in the Hostel.
49 He is practising swimming in swimming pool.
50 The girl is adept in wrestling.
51 The teacher writes on the board.
52 I am writing in my exercise book.
53 There is ink in the pen.
54 The ink is exhausted in the ballpoint pen.
55 Sanskrit is easiest and sweetest among languages.
56 Narmada is the longest among rivers.
57 The jackal is the most cunning among the forest animals.
58 Manoharan is friendly with(in) me like a brother.
59 The cowherd ties the cows to the hooks.
60 He is a rogue in (his) habits.

## Lession 32

## Revision Exercises.

I. Translate into English.

पर्वतयोः मध्ये नदी प्रवहति ।

नेत्रायां अश्रूणि पतन्ति । सारथिः अश्वाभ्यां घासं यच्छति । दीनेभ्यः भोजनं देहि । बालौ आलयं गच्छतः । भोजनात् पूर्वं हस्तौ क्षालय । करयोः दश अंगुलयः सन्ति । बालः पादाभ्यां चरति । मधुकराः पुष्पेभ्यः मधु पिबन्ति ।

II/ Give the gender and meaning of the following.
लता, याचक, फल, भवन, आलय, आयुध, भूमि, मूषक, कामधेनु, द्वार, गिरि, तरु Decline the above words in all cases and numbers.

III. Complete the following sentences using proper forms of the words given within the brackets.

बालः (सङ्गीत) निपुणः । Ans: बालः सङ्गीते निपुणः

माता (शिशु) लालयति। अहं (पाणि) लिखामि। हरिणः (पाद) धावति । बालः (पाद) चलति । रमा (विद्यालय) आगच्छति । ललिता (जल) आनयति। सः (कर्ण) शृणोति । कपिः (हस्त) फलानि हरति। (पथिक) आभरणानि अपहरति। दुर्जनः (दुःख) जीवति। शकटं (चक्र) चलति । रामः (सीता) सह वनं गच्छति । अहं (राम) विना तत्र न गच्छामि । परपीडनं (पाप) भवति। वासाय (गृह) सज्जं कुरु। माता बालं (हस्त) आलिङ्गति । (राम) विना क्रीडाङ्गणं गच्छ । अयं (वाम) (हस्त) आददाति। अहं (दक्षिण) (हस्त) लिखामि । बुद्धिः (विद्या) विलसति। (कृष्ण) समानः वीरः न भवति। (श्रम) सर्वं साध्यं अस्ति। पद्मं (तटाग) विकसति। वानरः (वृक्ष) वृक्षं प्लवति। (नदी) प्रवाहः अधुना मन्दः भवति। (गङ्गा) तीरे वाराणसी भवति। रामः (परीक्षा) उत्तरणं इच्छति। (जटायु) समक्षं रावणः सीतां अपाहरत्। (त्वद्) मङ्गलं भवतु। (वृक्ष) छायायां धेनुः तिष्ठति। (विनय) विद्या वर्धते। (सीता) पार्श्वे रामः तिष्ठति। (वृष्टि) जलं लभते। (आचार्य) व्याकरणं पठ। कस्तूरी (हरिण) जायते। (लालन) बालः सन्तोषं लभते। (सिंह) भयं भवति। माणवकः (आसन) उत्तिष्ठति।

IV. Make sentences with the following words.

पश्यावः, पठतः, गच्छसि, लभते, व्यायामः, दुःखं, सङ्गच्छति, जीवति, नश्यति, यच्छामः, वितरति, फलानि, प्रजाः, उद्यानं, क्रीणामि, अतः, प्रभवति

V. Make sentences with the following words.

कुप्यति, त्रस्यति, समर्थः, अलं, विना, ऋते, उद्भवति, याचते, सह, बिभेति, साधु, नमः

VI. Decline the following words in the required cases.

| | | |
|---|---|---|
| हरि - 6th | सीता - 4th | फलं - 7th |
| गुरु - 4th | बुद्धिः - 4th | कन्दुकं - 3rd |
| प्रजा - 5th | याचना - 7th | अवज्ञा - 2nd |
| साधुः - 2nd | हेतुः - 6th | गतिः - 2nd |
| रात्रिः - 7th | नदी - 7th | त्वं - 3rd |
| एतत् (पु) - 3rd | इदं (नपुं) - 5th | वाराणसी - 7th |
| परीक्षा - 4th | जननी - 5th | भोजनं - 6th |

VII. Conjugate the following verbs fully.

धावति, चलति, क्रीडति, कुप्यति, लिखति

आनयति, गायति, भवति, जयति, क्षालयति

VIII. Give the meanings of the following words.

कुसुमं, सुता, जननी, मयूरः, कृमिः, वधूः, घण्टा, ध्वनिः, बाल्यं, माहात्म्यं, पुरतः, उच्चैः, परशुः, सम्यक्, कूपः, पुष्पवाटी, सहपाठकः, भृतकः, स्नुषा, मोदकः, पादपः, क्षीराब्धिः, स्पर्धा, क्रीडनकं, चित्रलेखनं, अंगुल्यः, तस्मिन्,त्वयि, मह्यं, युवयोः, अस्मासु, एषां, अस्य

X. Give Sanskrit equivalents of the following words.

Hill, River, garden, relative, poet, wife, water, tree, creeper, temple, everyday, but, here and there, bamboo, therefore, always, sometime, street, fame, prize, father, oil.

XI. Translate into Sanskrit.

1. Mother is giving food to the child.
2. Education gives modesty.
3. Rama climbs the mountains.
4. Go home.
5. The husband goes to the shop with his wife.
6. He attains victory in the battle.
7. What am I doing ?
8. The lion is an enemy to the elephant.
9. The cat is an enemy of the rat.
10. Sugriva is a friend of Rama.
11. The rivers arise from the Himalayas.
12. Tears flow from the eyes.
13. The king gives clothes to the poor.
14. The mother is angry with me.
15. Who is beating the horse with the hands ?
16. That man is wandering here and there for food.
17. What is the cause of her anger ?
18. Who is climbing the hill ?

XI. Translate into English.

कः तत्र गच्छति ? तं आनय । हिमवतः शिखराणि रम्याणि । प्रातः सूर्यं नमामः । आर्य ! स्वागतं भवते । उपविशतु भवान् । माला चित्रं मष्या लिखति । अहं श्रीरङ्गं गन्तुं इच्छामि । गोपालः उद्याने कन्दुकेन क्रीडति । वेङ्कटेश ! त्वं किं श्रीरङ्गे वससि ? बाला दुकूलाय स्पृहयति । माता तस्यै नूतनानि आभरणानि यच्छति । आवां छायाचित्रस्य दर्शनाय नगरीं गच्छावः ।

---

# ஸம்ஸ்க்ருதத்தை எளிதில் கற்க எமது பாட நூல்கள்

| | |
|---|---|
| ஸம்ஸ்க்ருதஸ்ரீ பாடமாலா | |
| 1-6 பாகம் ஒவ்வொன்றும் | 25.00 |
| ஸம்ஸ்க்ருதஸ்ரீ அகராதி தமிழில் பொருளுடன் | 120.00 |
| சப்தமஞ்சரீ | 25.00 |
| ஸம்ஸ்க்ருதஸ்ரீ ஆண்டு இதழ்களின் தொகுப்பு 10, 11, 12, 13, 14, 16 | 40.00 |
| 17, 18, 19, 20, 21, 22 ஒவ்வொன்றும் | 40.00 |
| பதிவுத் தபால் மூலம் அனுப்பப்படும் | ரூ. 30.00 |

முன்பணமாக M.O. அல்லது D.D. யில் அனுப்பவும்.

| | |
|---|---|
| ஸம்ஸ்க்ருதஸ்ரீ ஆண்டுச் சந்தா | ரூ. 40.00 |
| ஆயுள் சந்தா | ரூ. 40.00 |

தொடர்பு கொள்ள முகவரி :-

**ஸம்ஸ்க்ருத எஜுகேஷன் ஸொஸைடி**
148-150, லஸ் சர்ச் ரோடு, மையிலாப்பூர், சென்னை-600 004
Phone : 2466 1401

Lasertypeset & Printed at
**V.K.N. Enterprises**
8/1, Dr. Ranga Road., Mylapore, Chennai-4 Ph:24950775